पुनर्नेपथ्याभिमुखमवलोक्य। अहो कथमकस्मादेव।

अद्वैतप्रमुखाः पतन्ति युगपत्सर्व्वे क्षितौ दण्डव-
च्छ्रीवासादिचतुःसहोदरवधूमुख्याः स्त्रियश्चाखिलाः।

आ ज्ञातम्।

व्याकोषाम्बुजमालिके इव कृपामाध्वीकनिस्यन्दिके
स्वानन्दोर्म्मिविनिद्रिते विकचयामासायमीशो दृशौ॥

पुनश्चिरं निरूप्य। अहो अत्यद्भुतम्।

मच्चित्ता भवतेति वारिदघटागम्भीरधीरस्वरं
भाषित्वाऽङ्घ्रिसरोरुहे भगवताऽमीषां शिरःस्वर्पिते।
सास्रं सोत्कलिकं सवेपथु ससीत्कारं सरोमोद्गमं
सोल्लासञ्च सकौतुकञ्च यदमी आनन्दतन्द्रां ययुः॥

तदतः परमत्रैवागमिष्यन्ति सर्व्वे तदेहि स्थानान्तरं चि-
न्तयामः।

अध। सखे ममावस्थानं क्व चिन्तनीयम्।

कलिः। चिन्तितमस्ति श्रूयताम्।

विद्याशीलतपःकुलाश्रमयुजोऽप्येकान्तदान्ताश्च ये
निन्दन्त्यस्य विभोश्चरित्रमनघं तेषु त्वया स्थीयताम्।
त्वत्पत्नी तु मृषा वहिर्मुखमुखेष्वास्तां तनूजश्च ते
दम्भः केवलशुष्ककर्म्मकुशलेष्वेतेन मा खिद्यताम्॥

अध। यथा रुचितं ते। इति निष्क्रान्तौ।

विष्कम्भकः। ततः प्रविशति पर्य्यङ्काहूढो गृहीतदिव्य-
वेशभूषः स्वानन्दसुप्तप्रबुद्ध इव भगवान् विश्वम्भरः परितो-

विभवस्याद्वैतादयस्य दूरे कीर्त्तयन्तो अन्ये च भागवताः।

भगवान्। अद्वैत।

गोलोकादवतारितोऽस्मि भवतैवाहं सुदुर्व्वारया
स्वप्रेमामृतवन्ययैव परया दैन्यादिनाऽनन्यया।

अद्वै। अञ्जलिं बद्धा।

कोऽहं क्षुद्रतरस्त्वयैव भगवन् लीलावशेनात्मना
लोकानुग्रहसाग्रहेण धरणावात्माऽयमाविष्कृतः॥

कथमन्यथा। "तथा परमहंसानां मुनीनाममलात्मनाम्। भक्तियोगविधानार्थं कथं पश्येमहि स्त्रिय" इति कुन्त्युक्तदिशा तथाविधानां नीरसतया शुष्कहृदयानां मुनीनां हृदयसरसीकरणाय प्रकटित-जगन्मङ्गल-मङ्गलावतारेण स्वयं भगवता व्रजराजकुमारेण विरचितासु पुरुषार्थ-सार्थापार्थीकरण-समर्थ-श्रवणकीर्त्तनादिषु ब्रह्मानन्दादपि चमत्कार-कारिणीषु गोकुल-मथुरा-द्वारवती-लीलासु "भगवत्युत्तमश्लोके भवतीभिरनुत्तमा। भक्तिः प्रवर्त्तिता दिष्ट्या मुनीनामपि दुर्ल्लभा" इत्युद्धवोक्तदिशा सकल-रस-पारावार-पारवर्त्ति-गोकुलाद्यपरनामनि श्रीवृन्दावनधामनि निकाम-निरतिशयानन्द-भूमनि मूर्त्तिमदानन्दशक्तिभिः सतत-सन्तन्यमान-मानस-राग-परभाग-भागधेयाभिराभीरभीरुभिः प्रवर्त्तितं तादृशप्रेमतत्त्वं तदानीं तत्रैव स्थितम्। सम्प्रति सम्प्रतिपद्यमान-तदास्वादस्वादर-गृहीत-समुचित-विग्रहस्य तव सौभगवतो भगवतो निरवधि तदेव मधुरतर-रस-रहस्य-पीयूष-यूषमाहितगण्डू-

षमाचामतोऽङ्गुलि-विवर-विगलिता इव तत्कणाः क्व नामास्माभिरप्याचम्यन्ते।

भगवान्। श्रीवास स्मरसि विनिर्यतस्तवाह-
नारीत्वं यदिह चपेटपाटवेन।

श्रीवासः। स्मृतिमभिनीय।

आवेद्मि प्रभुवर मोचितोऽस्मि मृत्योः
केनापि प्रसभमिति स्मृतिर्ममास्ते॥

सर्व्वे विस्मयं नाटयन्ति।

भगवान्। श्रीवास् आमूलं कथय सर्व्वे शृण्वन्तु।

श्रीवा। भगवत आविर्भावात् पूर्व्वमाशैशवमाषोडशवर्षमयं जन्तुरतिदन्तुरतया द्विजगुर्व्वादिषु मन्तुमत्तया मत्तया मनोवृत्त्याऽगच्छदशान्ति-दशाऽन्तिम-काष्ठा-काष्ठायमान-हृदयोदयो वृथा-कलह-लहरी-कुकथादिभिर्मद-मेदुर-दुरवस्थित-धीः स्वप्नेऽपि नश्रुत-कीर्त्तित-भगवद्गुणः कदाचिदाचित-पूर्व्व-सुकृत-सुकृत-वशान्निद्रा-निद्राविताया सञ्ज्ञायां केनापि करुणात्मना स्वप्ने समुपदिष्ट इव जातोऽस्मि। यथा "अरे ब्राह्मणब्रुव ब्रुवन्तु के त्वामुपदेशवाचं वा चञ्चलहृदयं तथापि ब्रूमहे। वर्षमेकं तेऽतः परमायुरतःपरं वृथायुःक्षेपं माकार्षीरिति" विभावितायां विभावर्य्यां वर्य्यां तामुपदेशवाचमनुस्मरन्नल्पायुष्कतया विमनस्को विरताखिल-चापलस्तद्दिनमुपोषितः पोषितस्तेनैवोपदेशापदेशात्मतेन पुरुषनिःश्रेयसं किमिति निर्णेतुं विधिवन्नारदीय-पुराणपद्यमिदमुपलब्धवानस्मि। यथा "हरेर्नाम हरेर्नाम हरे-

नामैव केवलम्। कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा"॥ इति तदनु दनज-दमनोपदेशमिव तन्मन्वानोऽन्वानोदित-सकल-कर्म्मा हरिनाम-मात्र-शरणः शरणमपि विस्मृतवानस्मि। सर्व्वैरेवोपहस्यमानोऽपि प्रशान्तमना मनागपि नान्यवृत्तिस्त-देव मृत्युदिनमनुसन्दधानो दधानो हृदि विषादं मासान् ग-णयन्नुपरते वर्षे प्रत्यपसन्ने च मृत्युदिवसेऽवशेषायुरहं श्रीभा-गवताध्यापनकर्त्तुर्देवानन्दपण्डितस्यालयं तच्छुश्रूषया गतः प्रह्लादचरितश्रवणकाले तमेव समयमासाद्य साध्वमान-ज्ञानो मृत्युवशङ्गतः पतितोऽस्मि। तद्भवानाऽऽलिङ्गतोऽङ्गणातलं तदनु केनापि, मृत्युमुखान्मोचितं चितं पुनरायुषेत्यात्मानं मन्यमानो विवश इव पुनरुत्थितवानस्मि। तस्मिन्नेव समये सर्व्व एव मामुत्थाप्य गृहमानिन्युः।

भगवान्। निशां समया स मया स्वप्नो दर्शितः प्रगत-जीवि-तेऽवितोऽपि पुनर्जीवित-दानेन।

सर्व्वे विस्मयं नाटयन्ति।

भग। स्पर्शमणेः स्पर्शवशात् कनकीभावं प्रजातमिव लोहम्।
तव तु तदेव शरीरं नारदशक्तिप्रवेशतोऽन्यदिव॥

अद्वै। एवमेतत्। अन्यथा न मृतः पुनर्जीवति किन्तु भग-वन् सर्व्व एवैते तव स्वभाव-भाव-सहचरास्तथापि मद्भजनेन जनेन शरीरान्तरमिव लभ्यते इति शिक्षया अहयाऽऽनन्देन भगवतेदमध्यवसितम्। वस्तुतः स्तुतमहिमाऽयं तव भक्तिश्री-वासः श्रीवास।

भगवान्। अद्वैत सत्यमेतत्।

अद्वै। भगवन् मुरारिमुकुन्दादयोऽप्येते तव दास्यभाव-भाव-दातारो दातारो नयनानन्दस्य।

भगवान्। अद्वैत अन्तरनयोरनयो महानस्ति। उभौ सशङ्कं वेपाते पातेन कुलिशस्येव।

अद्वै। देव कोऽसौ।

भगवान्। मुरारेर्मनसि न सिध्यति भक्तिरसो रसोन-दौर्गन्ध्यमिव विसारि-काटवमध्यात्म-भावनावनाग्रह-ग्रहिलत्वमेवास्ति। यदयमद्याप्यनुक्षण-क्षण एव वाग्मिष्ठविषये।

अद्वै। किमपराद्धमध्यात्मयोगेन।

भगवान्। त्वया कथमिदमुच्यते।

यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे।
विक्रीडतोऽमृताम्भोधौ किमन्यैः खातकोदकैः॥

अद्वै। मुकुन्देन किमपराद्धम्।

भगवान्। अनेन निरुच्यते। रुच्यते हि भगवतश्चतुर्भजरूपमेव तदेवोपास्यम्।

अद्वै। किमिदं मतममतमहो।

भगवान्। ऐच्छिकं भगवतश्चतुर्भुजत्वं स्वाभाविकं हि द्विभुजत्वमेव। तथाहि "नराकृति परं ब्रह्म, गूढं परं ब्रह्म मनुष्यलिङ्गं, परमात्मा नराकृति" रिति नराकृतित्वं द्विभुजत्वमेव।

अद्वै। "स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम"। तत् ज्ञापयन्तु निजरूपतत्त्वमिति।

भगवान्। सानुग्रहम्। तत्ते दर्शयितव्यम्।

अद्वै। अनुगृहीतोऽस्मि किन्तु भगवन्ननयोः प्रसीद सीदत एवैतौ कृतमनोऽरुषा परुषापराधेन।

दुर्व्वासनाविषविषादहरे सुषीम-
च्छायाकरे पुरुकृपामकरन्दवर्षे।
अम्भोजगञ्जनकृती चरणातपत्रे
मूर्द्ध्नतयोः कुरु विधेहि तथा प्रसादम्॥

भगवान्। तथा कृत्वा।

नायं सुखापो भगवान् देहिनां गोपिकासुतः।
ज्ञानिनाञ्चात्मभूतानां यथा भक्तिमतामिह॥

इति पठित्वा सानुकम्पम्। माऽतःपरं विजातीय-वासनास-नाथौ भवतम्।

उभौ। दण्डवत् पतित्वा।

अहं हरे तव पादैकमूल-
दासानुदासो भवितास्मि भूयः।
मनः स्मरेतासुपतेर्गुणानां
गृणीत वाक् कर्म्म करोतु कायः॥

इति पठतः।

भगवान्। तथास्तु।

धूर्त्ताम्बरः। सदैन्यम्। देव

तप्तानि भूरीणि तपांसि नाथ
बहूनि तीर्थानि च सेवितानि।

तथापि चेतो नहि मे प्रसन्नं
कृपाकटाक्षं कुरु मे प्रसीद ॥

इति निःसाध्वसं साध्वसङ्कोचेन तत्पादयोः शिरो निदधाति ।

श्रीवासः । आलोक्य जनान्तिकं । गदाधर पश्य पश्य ।

कठिनतरतपस्योज्जृम्भदम्भप्रलम्भा-
दश्मनिश्मनिकठोरं चित्तमस्य द्विजस्य ।
सपदि भगवदङ्घ्रिस्पर्शनादेव भूत्वा
द्रुतमिव नयनाभ्यां रोमभिश्चोज्जिहीते ॥

तदधुनाऽस्मिन् पुत्रधिया कीर्त्तनानन्देन सह विहरमाणा वयं मत्तनयोऽनयोपचित्याऽमीभिरेवोन्मादितो दितोऽप्यस्य व्यवहारमार्ग इति बहुशो निर्भर्त्सिताः स्मः शचीदेव्या। यद्यसावधुना धुनानमात्मज-धियमात्मजमात्मजाऽऽनन्दाऽऽवेशविवशमेतं पश्यति श्यति तदाऽस्मिन् पुत्रभावभावं हेयत्वेन। तत्कथमिदं सम्पत्स्यते ।

गदाधरः । आचार्य्यास्तत्कथयन्ति ।

अद्वै । किं तत् ।

श्रीवासः । कर्णे । एवमेव ।

अद्वै । साध साऽधनाऽऽनीयतां कः सम्भ्रमो भ्रमोऽस्या अपयातु ।

श्रीवासः । यथाज्ञापयसि ।

इति निष्क्रम्य तामादाय पुनः प्रविश्य च ।

स्वामिन्नाचार्य्य विचार्य्य विज्ञापय जगन्मातरमेतां रमेतां

भगवतोऽत्र कृपाप्रसादौ।

अद्वै। अञ्जलिं बद्ध्वा। देव देवहूतिः कपिलेन किल ज्ञानयोग-भक्तियोग-योगतः कृतार्थीकृता। साम्प्रतमियं विश्वम्भर-जननी विश्वम्भर जन-नीति-कलया परिवृता केवल-वलमान-प्रेमाऽऽनन्देन कृतार्थीक्रियताम्।

इति कराग्रेणावलम्ब्य भगवदग्रतोऽवैयग्र्यतोऽग्र्यतोषेण समुपसर्पयति।

शची।

सचमत्कारविस्मयं सानन्दाऽऽवेश-पेशलमद्भुत-नयं तनयं विलोक्य जात-तदनुकम्पा कम्पायमान-शरीरा वाग्देवताऽवतार-प्रतिभा-प्रतिभासमानेव किञ्चिदपाठीत्।

विश्वं यदेतत् स्वतनौ निशान्ते
यथावकाशं पुरुषः परोभवान्।
विभर्त्ति सोऽयं मम गर्भजोऽभू-
दहो नृलोकस्य विडम्बनं महत्॥

इति स्तुवती ग्रह-गृहीतेव विकला बलादेव तच्चरणौ जिघृक्षति।

अद्वै। निवार्य्य सविस्मयम्।

कुत इयमस्याः स्फूर्त्तिर्भवति हि सहजः स मातृभावोऽयम्।
देहान्तरमपि भजते निरुपहितः प्राक्तनो भावः।

भगवान्। देवि यद्यपि जगज्जननी त्वमसि तथापि श्रीवासादिषु यज्जातस्तेऽपराधस्तदुपरमे परमेश्वर-प्रसादस्ते भावी। भा-वीचि-निकर-परिपन्थी हि भागवतापराधः।

अद्वै। भगवन् मैवम्। नाऽपराध्यति जगज्जननीयं क्वापि यज्जठरभूस्त्वमधीशः। हन्त मातरि भवन्ति सुतानां मन्तवः किल सुतेषु न मातुः।

श्रीवासं सम्बोध्य।

हंहो श्रीवास यद्यपीशधिषणा तनयेऽभूदेव कस्य दुहितुर्न तथापि। भक्तिरीदृगजनिष्ट यदेषा पुत्रपद्युगजिघृक्षुरिहासीत्।

श्रीवा। अधुना निःसङ्कोचाः स्मः।

अद्वै। भो भोः श्रीवासादयः अस्य केवल-बल-मानैश्वर्य्यावेशेन मातरं प्रति मातृभावोऽपि निरस्तो मातृमातृभावोऽपि निरस्तोऽयं चेत् तद्यथायमावेशो निवर्त्तते तथा स्तुध्वम्।

सर्व्वे। स्वामिन्नेवमेव। इत्यद्वैतेन समं तथा कुर्व्वन्ति।

भो देव शाश्वती भगवतो भगवत्ता नाथ बोधसुखचिन्मयता च। ही तथाऽपि हि बिभर्त्ति यदा यद्धर्म्म तत्प्रकृतिमेष दधाति। तदिदानीं भगवन्तोऽवन्तोऽनुकम्पां तथाकर्त्तुमर्हन्ति। यदाविष्कृतभक्तावतारतया शैशवमारभ्य मद्विधभाग्यानुसारिरूपं गृह्णद्भिर्वयमामोदिता दिताऽखिलतापा भवद्भिः। तदेवाऽधुना प्रकटयितुमर्हन्ति। यदाहार्ज्जुनः। "तदेव मे दर्शय रूपमित्यारभ्य दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्द्दन। इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गत" इति। वस्तुतस्तु।

अलौकिके वस्तुनि लौकिकत्वं
नालौकिकत्वस्य विरोधहेतुः।

मण्यन्तराणां गुणसन्निवेश-
श्चिन्तामणेर्न ह्यपकर्षकारी ॥

भगवान्। स्मारितभक्तावेशस्तत्त्वैव कृतप्रवेशः प्रकृतिमास्थाय।

भो अद्वैतादयः किमहं एतावन्तं कालं सुषुप्त इवासम्। कथं भवद्भिर्नाहं प्रबोधितः।

सर्व्वे। भगवन् आनन्दनिद्राभङ्गभिया।

भगवान्। हन्त एतावान् समयो मयोपहतज्ञानेन वृथा गमितस्तदागच्छत श्रीकृष्णं कीर्त्तयामः।

सर्व्वे। सहर्षम्। यथा ज्ञापयति देवः। इति निष्क्रान्ताः सर्व्वे।

स्वानन्दावेशो नाम प्रथमोऽङ्कः ॥

---

द्वितीयाङ्कः।

ततः प्रविशति।

विरागः। सर्व्वतोऽवलोक्य। अहो वहिर्मुखबहुलं जगत्।

न शौचं नो सत्यं न च शमदमो नापि नियमो
न शान्तिर्न क्षान्तिः शिव शिव न मैत्री न च दया।
अहो मे निर्व्याजप्रणयिसुहृदोऽमी कलिजनैः
किमुन्मूलीभूता विदधति किमज्ञातवसतिम् ॥

हन्त कथमज्ञातवासस्तेषां सम्भावनीयः तथाविधस्थलविरहात्। तथा हि।

षष्ठे कर्म्मणि केवलं कृतधियः स्वत्रैकचिह्ना द्विजाः
संज्ञामात्रविशेषिता भुजभुवो वैश्यास्तु बौद्धा इव ।
शूद्राः पण्डितमानिनो गुरुतया धर्म्मोपदेशोत्सुका
वर्णानां गतिरीदृगेव कलिना हा हन्त सम्पादिता ॥

अपि च ।

विवाहायोग्यत्वादिह कतिचिदाद्याश्रमयुजो
गृहस्थाः स्त्रीपुत्रोदरभरणमात्रव्यसनिनः ।
अहो वानप्रस्थाः श्रवणपथमात्रप्रणयिनः
परिव्राजावेशैः परमुपहरन्ते परिचयम् ॥

कतिचित् पदानि परिक्रम्य । अहो अयं समीचीनो जनपदः । अत्र हि भूरयो रयोज्ज्वलप्रतिभाः प्रतिभान्ति विद्वांसः । तदमी अवगाह्या वाह्या अवाह्या वा । इति चिरं निरूप्य । अहो ।

अभ्यासाद्य उपाधिजात्यनुमितिव्याप्त्यादिशब्दावले-
र्जन्मारभ्य सुदूरदूरभगवद्वार्त्ताप्रसङ्गा अमी ।
ये यत्राधिककल्पनाकुशलिनस्ते तत्र विद्वत्तमाः
स्वीयं कल्पनमेव शास्त्रमिति ये जानन्त्यहो तार्किकाः ॥

तदलमेभिः सह वार्त्तया इतोऽन्यतो गच्छामि । इति कियद्दूरं गत्वा । अहो अमी अमीव-रहिता हिताभियोगा इव दृश्यन्ते तदमून्निरूपयामि । इति तथा कृत्वा । अहो अमी मायावादिनः । तथा हि

सन्मात्रानिर्विशेषाश्चिदुपधिरहिता निर्विकल्पा निरीहा
ब्रह्मैवास्मीति वाचा शिव शिव भगवद्विग्रहे लब्धवैराः ।

येऽमी श्रौतप्रसिद्धानहह भगवतोऽचिन्त्यशक्त्याद्यशेषान्
प्रत्याख्यान्तो विशेषानिह जहति रतिं हन्त तेभ्यो नमो वः॥

इति तानपास्य पुनरन्यतो गत्वा परितः परिलोक्य। अहो अमी यदन्योऽन्यं विवदन्ते तदस्य तत्त्वमवगन्तव्यम्। इति निभाल्य। अहो कपिल-कणाद-पातञ्जल-जैमिनि-मतकोविदा एते अन्योऽन्यं विवदन्ते भगवत्तत्त्वं न केऽपि जानन्ति तदितो गन्तव्यम्। इति पुनः कतिचित् पदानि गत्वा। अहो दक्षिणस्यां दिशि पतितोऽस्मि। यदमी आर्हत-सौगत-कापालिकाः प्रचण्डा हि पाषण्डाः। एते पाशुपता अपि हतायुषो मां हनिष्यन्ति तदितः पलायनमेव शरणम्। इत्यपसृत्य कियद्दूरं गत्वा किञ्चिदवलोक्य। अहो अयं साधुर्भविष्यति यतः खलु नदीतट-निकट-प्रकट-शिलापट्ट-घटित-सुखोपवेशः क्लेशातीतो गुणातीतं किमपि ध्यायन्निव समयं गमयति। तदमुं निरूपयामि। इति तथा कृत्वा। अहो।

जिह्वाग्रेण ललाटचन्द्रजसुधास्यन्दाध्वरोधे महद्
दाढ्यं व्यञ्जयतो निमील्य नयने बद्धाऽऽसनं ध्यायतः।
अस्योपान्तनदीतटस्य किमयं भङ्गः समाधेरभूत्

इति सविस्मयं विचिन्त्य। अहो ज्ञातम्।

पानीयाहरणप्रवृत्ततरुणीशङ्खस्वनाकर्णनैः॥

तदिदमुदरभरणाय केवलं नाट्यमेतस्य। पुनरन्यतो गत्वा परितोऽवलोक्य। अहो अयं निष्परिग्रह इव लक्ष्यते। तैर्थिक एव भविष्यति। तदस्य दैवादागतेन पथिकेन सह सङ्कथयतः

कथयैव हृदयमाकलनीयम्। इति आकर्ण्य स्वयमनुवदति।

गङ्गाद्वारगयाप्रयागमथुरावाराणसीपुष्कर-
श्रीरङ्गोत्तरकोशलावदरिकासेतुप्रभासादिकाम्।
अब्देनैव परिक्रमैस्त्रिचतुरैस्तीर्थावलीं पर्य्यट-
न्नब्दानां कति वा शतानि गमितान्यस्माद्दशानेतुकः॥

इत्यनूद्य। भद्रं भो भद्रं कलिनोपद्रुतं सत्यं निभृतं त्वयि वर्त्तते। तदितोऽपसरामः॥ इति तथा कृत्वा पुरतोऽवलोक्य। अहो अयं तपस्वी समीचीनो भविष्यतीव निभालयामि। इति कृत्वा हन्त हन्त ततोऽप्ययं दुष्कृती। तथा हि

हुंहुंहुमिति तीव्रनिष्ठुरगिरा दृष्ट्याप्यतिक्रूरया
दूरोत्सारितलोक एष चरणावुत्क्षिप्य दूरं क्षिपन्।
मृत्स्नालिप्तललाटदोस्तटगलग्रीवोदरोराः कुशै-
र्दीव्यत्पाणितलः समेति तनुमान् दम्भः किमाहो स्मयः॥

अहो चित्रमिदानीम्।

विष्णोर्भक्तिं निरुपधिमृते धारणाध्याननिष्ठा
शास्त्राभ्यासश्रमजपतपःकर्म्मणां कौशलानि।
शैलूषाणामिव निपुणताऽऽधिक्यशिक्षाविशेषा
नानाकारा जठरपिठरावर्त्तपूर्त्तिप्रकाराः॥

तदहो कले साधु एकातपत्रीकृतं भुवनतलं भवता। तथा हि।

उत्सारितं शमदमादि निगृह्य गाढं
भृत्यीकृतं क च न हन्त धनार्ज्जनाय।

कामं समूलमुदमूल्यत धर्म्मशाखी
मैत्रादयश्च किमतःपरमीहितव्यम् ॥

त्वरां विमृश्य। तादृश-बन्धु-जन-विप्रयोग-जनित-क्लेशेन चिरतर-तदनुसन्धान-कृतपरिश्रमेण च निःसारीभूत-भूतलाऽवलोक-शोकेन च भृशमाकुलोऽस्मि। तेन क्वचन च क्षणं विश्रमणीयम्।

इति तथा कृत्वा सवाष्पम्।

दृष्टं सर्व्वमिदं मनोवचनयोरुद्वेगयतश्चेष्टयो-
र्वैजात्यैकविसङ्कुलं कलिमलश्रेणीकृतग्लानितः।
कृष्ण कीर्त्तयतस्तथानुभजतः साश्रून् सरोमोद्गमान्
वाह्याभ्यन्तरयोः समान् वत कदा वीक्ष्यामहे वैष्णवान् ॥

आकाशे कर्णं दत्त्वा। "किं ब्रवीषि। यत्र भक्तिस्तत्रैव ते द्रष्टव्या"। इति। त्वरां विमृश्य। अहो भक्तिदेवी क्वाप्यस्तीति। सम्भाव्यते। पुनराकाशे लक्ष्यं बद्ध्वा। किं ब्रवीषि भोः।

"गौडक्षौणी जयति कतमा पुण्यतीर्थावतंस-
प्राया याऽसौ वहति नगरीं श्रीनवद्वीपनाम्नीम्।
यस्यां चामीकरचयरुचेरीश्वरस्यावतारो
यस्मिन् मूर्त्ता पुरिपुरि परिस्पन्दते भक्तिदेवी" ॥

इति सहर्षम्। हन्त हन्त जीवद्भिः किं न दृश्यते तदितस्तत्रैव गच्छामि। इति कतिचित्पदानि परिक्रामति।

ततः प्रविशति। भक्तिदेवी। पुरोऽवलोक्य। अम्मो को एषो निरन्तर-गरुओव्वेअ-वेअणा-जज्जरिज्जन्त-माणसो माणसो-

हग्ग-विब्भंस-गलाणाणणो मए पडिचिज्जन्तोवि मं आलोइअ लोइअ-भिस-दसं आवन्नो सन्तो सन्तोष पआसअन्तो सअन्तोदं मुञ्चन्तो व्व इध आअच्छदि। हन्त अम्हाणं एदादिसीए सम्पत्ति-पडिपत्ति-पडिवादिए सुत्थदसाए भाउणो विराअस्स सङ्गो सङ्गोचरो ण होइ। ण आणे दुज्जनेहिं कलिजणेहिं कलिदाक्खाहिदो उव्वरिओ ण वेत्ति (१)।

विरागः। अवलोक्य। इयमेव भक्तिदेवी। तथा हि

अन्तः प्रसादयति शोधयतीन्द्रियाणि
मोक्षञ्च तुच्छयति किं पुनरर्थकामौ।
सद्यः कृतार्थयति सन्निहितैकजीवा-
न्नानन्दसिन्धुविवरेषु निमज्जयन्ती॥

तदुपसर्पामि। इत्युपसृत्य। देवि विरागोऽहं प्रणमामि।

भक्तिः। सवात्सल्यम्। भात ओ जीवसि वसिणं पआणासि-तुमम्। एहि एहि इति करेण स्पृशति (२)।

---

(१) अहो क एष निरन्तरगुरूद्वेग-वेदना-जर्जरित-मानसा मान-सौभाग्य-विभ्रंश-ग्लानाननो मया परिचीयमानोऽपि माम् आलोक्य लौकिक-भिन्न-दशाम् आपन्नः सन् सन्तोषं प्रकाशयन् स्वयन्तोदं मुञ्चन्निव इत आगच्छति। हन्त अस्माकम् एतादृश्याम् सम्पत्ति-प्रतिपत्ति-प्रतिपादिन्याम् सुस्थदशायाम् भातुर्विरागस्य सङ्गः सङ्गोचरो न भवति। न जाने दुर्जनैः कलिजनैः कलितात्याहित उद्वृत्तो नवेति।

(२) हे भातः जीवसि वशिनाम् प्राणोऽसि त्वम्।

विरा। चरणावभिवाद्य। देवि कथय कथं सत्यादय इव कलिना भवत्यो न पराभूताः।

भक्तिः। विराअ ण आणेसि सुणह। अम्हाणंज्जेव कए कोवि महाकारुणिओ भअवं भअ-बन्ध-च्छेअअ-चरिदो गोरचन्दो ओदीणो (१)।

विरा। भगवति कथय किमत्र रहस्यम्।

भक्तिः। विराअ एदस्सिं कलिआले कलिआ-लेश-मेत्तंवि धम्मन्तरं ण त्थि। ण त्थिरदरं किंपि होइ। केअलं अलङ्करेदि। एदं कलिं भअवद्धम्मो बद्धं मोहंवि पराकरोदित्ति साहण-सद्ध-सद्धम्म। सुद्ध-भत्ति-जोएण एणसामवहारएण कलि-मल-मलण-आरिणा आचण्डालं चण्डाऽलङ्घणिज्ज-दुव्वासणा-वास-णाशेण सङ्गोपङ्गाओ मादिसीओ भत्तिदइओ सङ्गे कदुअ भअवदा अवदारो किदो भत्त-वेशेण (२)।

विरा। अवगतमिदं मितं प्रकाशयन्त्या गगनवाण्या। किन्तु

---

(१) विराग न जानासि शृणु। अस्माकमेव कृते कोऽपि महाकारुणिको भगवान् भव-बन्धच्छेदक-चरितो गौरचन्द्रः अवतीर्णः।

(२) विराग एतस्मिन् कलिकाले कलिका-लेशमात्रमपि धर्मान्तरं नास्ति। न स्थिरतरं किमपि भवति। केवलम् अलङ्करोति। एतं कलिं भगवद्धर्मो बन्धं मोक्षमपि पराकरोति इति साधन-साध्य-सद्धर्मः। भक्तियोगेन एनसामवहारकेण कलि-मल-मथन-कारिणा आचण्डालं चण्डाऽलङ्घनीय-दुर्वसना-वास-नाशेन साङ्गोपाङ्गां मादृशीं भक्तिदेवीं सङ्गे कृत्वा भगवता अवतारः कृतो भक्तवेशेन।

भवत्यो वा किमीहन्ते स वा देवः किमीहते।
निराश्रयस्य मम वा किमसौ भविताश्रयः ॥

भक्तिः। संस्कृतमाश्रित्य। विराग श्रूयताम्।

पनीमस्याण्डालानपि खलु धुनीमोऽखिलमलं
लुनीमः संस्कारानपि हृदि तदीयानतिदृढान्।
कृपादेवी तस्य प्रकटयति दृक्पातमिह चे-
त्तदा तेषामन्तः कमपि रसभावञ्च तनुमः ॥

विरा। तस्य कृपादेवीं विना स्वातन्त्रेण भवतीनां तथा सामर्थ्यं न विद्यते।

भक्तिः। तस्स वा तज्जणाणं वा णवाऽणुग्गहमन्तरेण अम्हे ण होम्म किं उण तधा कुणम्ह (१)।

विरा। द्वितीयप्रश्नस्योत्तरं किम्।

भक्तिः। विराअ सुणेहि (२) इति। संस्कृतेन।

नवद्वीपे नासीदिह स जनो यस्य न पुरे
हरेर्गेहं नो तद्यदपि भगवन्मूर्त्तिरहितम्।
न सा यस्याः सेवा न भवति न सा या न सरसा
रसो नासौ सङ्कीर्त्तननटनमुख्यो न खलु यः ॥

इयंञ्जेव तस्स ईहा (३)।

---

(१) तस्य वा तज्जनानां वा नवानुग्रहमन्तरेण वयं न भवामः किंपुनस्तथा कुर्म्मः।

(२) विराग शृणु।

(३) इयमेव तस्य इच्छा।

विरा। किमयं स्वयमेव तथाऽऽज्ञापयति। किं वा ते त एव तदाशयमभिमत्य मत्यनुसारेण सारेण व्यवहरन्ति।

भक्तिः। तस्स तहज्जेव महिमा महिमाणदो जं दट्ठुणज्जेव तं तहज्जेव गगहग्गत्था विअ होन्ति। जणाओ जह तस्स आसअं साअंज्जेव सव्वे जाणन्ति कुणन्ति च तदणुरूअं। तस्स ओदारे कमलावि ओदीसेव्व। जदो ण कस्सवि देसं तत्थ आसि। आम्भिअआलं सअंच जं करोदि तं सुणह (१)।

संस्कृतमाश्रित्य।

श्रीवासस्य गृहे कदाचन कदाप्याचार्य्यरत्नालये
श्रीविद्यानिधिमन्दिरेऽपि च कदा गेहे मुरारेरपि।
गायन् सुप्रियपार्षदेषु पुलकस्तम्भाश्रुघर्म्मादिभिः
सान्द्रानन्दमयीभवन्ननुदिनं देवो नरीनृत्यते॥

विरा। भगवति स किं सर्व्वदा भक्ताचरितमेव प्रकट यति। किंवा कदाचिदैश्वर्य्यमपि।

भक्तिः। संस्कृतेन। विराग यद्यपि

अलौकिकीतोऽपि च लौकिकीय
लीला हरेः काचन लोभनीया।

---

(१) तस्य तथैव महीमा-महिमानतो यत् तत् दृष्ट्वैव तथैव ग्रह-ग्रस्ताइव भवन्ति। जना यथा तस्य आशयं स्वयमेव सर्व्वे जानन्ति कुर्व्वन्ति च तदनुरूपं। तस्य अवतारे कमलापि अवतीर्णैव। यतो न कस्यापि दैन्यं तत्र आसीत्। आभिंस्तुकालं स्वयञ्च यत् करोति तत् शृणु।

महेशशीर्षादपि भूमिमध्यं
गतैव गङ्गा मुदमातनोति ॥

तहवि कहिम्पि कहिम्पि अलोइअंपि पअडेदि। तधाहि कहिम्पि दिअहे सिरिवास-वासम्मिकरिज्जन्त-देव-गेहप्प-दक्खिणो दक्खिणो-अङ्गण-गएण केणवि भाअधेअ-सुईवुत्तिणा महामज्जवेण मलेच्छेण मलेच्छेण वसणं सीव्वन्तेन दीव्वन्तेण दीम्हदरमएण भअवं विस्सम्भरो दिट्ठो। दट्ठूण तक्खणादो मइरा-मअदोवि मादअतमेण तस्स दंसणमएण भेम्हणो भविअ विअम्पिदणेत्तो हीहीमुओ दिट्ठं दिट्ठं कम्पित्ति-सव्वङ्ग-पुलइदो णिरन्तर-निस्सरन्त-प्पवाह-वाह सलिल-त्थिमिद-वक्खत्थलो वसणादिअं विक्खिविअ उद्धबाहु णच्चिदं पउत्तो सो। तदो तं तहाविधं पेक्खिअ भअवं अवंच-अन्तो सिरिवासं भणिदवन्तो (१)। श्रीवास किमिदं कथमकस्मादयमीदृग्जातो दृग्जातोत्सव इव। तदो तेणवि

---

(१) तथापि कदापि कथमपि अलौकिकमपि प्रकटयति। तथाहि कस्मिन्नपि दिवसे श्रीवास-वासे क्रियमाण-देवगेहप्रदक्षिणो दक्षिणाङ्गणागतेन केनापि भागधेयसूचीवृत्तिना महामद्यपेन अमलाक्षेण म्लेच्छेन वसनं सीव्यता दीव्यता जिह्मतरमदेन भगवान् विश्वम्भरो दृष्टः। दृष्ट्वा तत्क्षणतः मदिरा-मदतोपि मादकतमेन तस्य दर्शनमदेन विह्वलो भूत्वा विकम्पितनेत्रो हीहीमुखो दृष्टं दृष्टं कम्पित-सर्व्वाङ्गपुलकितेनि रन्तर-निःसरत्प्रवाह-वाह-सलिल-स्तिमित-वक्षःस्थलो वसनादिकं विक्षिप्य ऊर्द्ध्वबाहुर्नर्त्तितुं प्रवृत्तः सः। ततस्तं तथाविधं प्रेक्ष्य भगवान् अवञ्चयन् श्रीवासं भणितवान्।

भणिदं णिदंशणंव्व कुणन्तेण पडिहासरसस्स (१)। भगवन् अपूर्व्वं एवायं तव मदस्य महिमा यतोऽयमद्य मद्यघट-घटमानासक्तिरपि न धियं जहाति। हा, तिलमात्रभवद्दर्शनेनाऽनेनाऽनेना जातोऽजा-तोद्-रहितो हितो भवन्नति-ममाद्।

विरा। ततस्ततः।

भक्तिः। तदो तदोपहुदि भअवदो णाम-मेत्तसरणो स-व्वपरिअरं उज्झिय ओधूअवेसो भुविअ णच्चन्तो गाअन्तो जवणाचारिएहिं ताडिज्जन्तोवि भअवदो णामसङ्कीत्तणं कुणन्तोज्जेव वट्टदि। केणवि पुच्छिदो। उण विश्वंभरोज्जेव ईश्वरो णावरो कोवित्ति भणेदि। सअलेहिं भाअवदेहिं विहिद-देहजात्तो सिद्धो विअ भविअ विच-रेदि (२)।

विरा। देवि कीदृशरूपमनेन दृष्टम्।

भक्तिः। विराअ आणन्दोज्जेव भअवदो रूअं। जेण रूएण महंज्जेव आणन्दो होइ। तंज्जेव तस्स रूअंत्ति इदरेदरस-

---

(१) ततस्तेनापि भणितं निदर्शनमिव कुर्व्वता परिहासरसस्य।

(२) ततः ततःप्रभृति भगवतो नाममात्रसरणः सर्व्वपरिकरं त्यक्त्वा अवधूतवेशो भूत्वा नृत्यन् गायन् यवनाचार्य्येण ताड्यमानोपि भगवतो नामसङ्कीर्त्तनं कुर्व्वन्नेव वर्त्तते। केनापि पृष्टः। पुनर्विश्वम्भर एव ईश्वरो नापरः कोपीति वदति। सकलैर्भागवतैर्विहितदेहयात्रः सिद्ध इव भूत्वा विचरति।

व्वपेक्खतुणं आनन्दरूवाणंत्ति आणन्दतारतम्मेण रूअ-दंश-णस्स तारतम्मम् (१)।

विरा। कथमयं नीचयोनिरेतादृशसौभाग्य-भाजनमासीत्।

भक्तिः। संस्कृतेन।

न जातिशीलाश्रमधर्म्मविद्या-
कुलाद्यपेक्षो हि हरेः प्रसादः।
यादृच्छिकोऽसौ वत नास्य पात्रा-
पात्रव्यवस्थाप्रतिपत्तिरास्ते॥

विरा। एवमेव ततस्ततः।

भक्तिः। तदो अवरस्सिं दिअहे मुरारि-भअणाङ्गणे पुण्णि-मा-चन्द-चन्दिआ-पक्खालिआए णिशाए उवविट्ठेहिं सअलेहिं भाअवदेहिं सोज्जेव देओ सङ्करिषणरूओ दिट्ठो (२)।

विरा। देवि विशिष्य कथय।

भक्तिः। अग्गदो वंभमिज्जन्त-मत्त-मऊअर-णिअर-परि-पिज्जन्त-चन्दिआ-चअ-तक्काल-श्यामलिद-गगणतलान्धआ-

(१) विराग आनन्द एव भगवतो रूपम्। येन रूपेण सह्यानेव आनन्दो भवति। तदेव तस्य रूपमिति इतरेतर-सव्यापेक्षात्तूणां आनन्दरूपाणामिति आनन्दतारतम्येन रूपदर्शनस्य तारतम्यम्।

(२) ततः अपरस्मिन् दिवसे मुरारिभवनाङ्गणे पूर्णिमा-चन्द्र-चन्द्रि-का-प्रक्षालितायां निशायाम् उपविष्टैः सकलैर्भागवतैः स एव देवो सङ्कर्षणरूपो दृष्टः।

रम्मि दीसन्तम्मि कोवि काअम्बरी-परिमलो सअल-जणेहिं आलद्धो (१)।

विरा। ततस्ततः।

भक्तिः। तदो आलद्धे परिमले सअलेहिं भअवं पुच्छिदो। जधा (२) भगवन् कथमाकस्मिकोऽयं पुष्पन्धय-गणान्धीकरण-चणः परिमलो विमलो विस्मयं नः समुल्लासयति कादम्बर्य्याः। परतश्च जनितकौतूहलं हलं विपक्ष-पक्ष-मुषलं मुषलञ्चालोक्यते।

विरा। ततस्ततः।

भक्तिः। तदो सिरिविस्सम्भरदेण उत्तम्। (३) हन्त भो निखिल-हृदय-सङ्कर्षणेन सङ्कर्षणेन भवताऽवताऽद्य प्रादुर्भवितव्यम्। तदग्रे कादम्बरी वरीयसी तत्प्रियाणां तदायुधं युधं विनापि विराजमानं हलं मुषलञ्च प्रादुरभूत्।

विरा। ततस्ततः।

भक्तिः। तदो तक्ख णिअदन्तोज्जेव सो देओ तेहिं मइरा-मोअ-मुदिअ-लोल-लोहिद-लोअणो एक-कस्स-तड-तण्डविद-कुण्डलो ससि-मण्डल-पाण्डरो सोज्जेव गोरचन्दो अदस्सअं

(१) ध्यग्रतो वम्भ्रम्यमाण-मत्त-मधुकर-निकर-परिपीयमान-चन्द्रिका-चय-तत्काल-श्यामलित-गगन-तलान्धकारे दृश्यमाने कोऽपि कादम्बरी-परिमलः सकलजनैरालब्धः।

(२) तत आलब्धे परिमले सकलैर्भगवान् पृष्टः। यथा

(३) ततः श्रीविश्वम्भरदेवेन उक्तम्।

सअंज्जेव तालङ्कोऽलं कोदूहलेण सम्भूतो। तदो तच्चरिदाऽऽहिद-णअ-णअ-गीद-पदाइं गाअन्तेहिं तेहिं णच्चारिदो बहुदरं ईडिदोवि कखणं विम्हअ-कारि संवुत्तो (१)।

विरा। ततस्ततः।

भक्तिः। एव्वं बुद्ध-वराह-णरसिंह-मुक्खतराऽवदाराणुआरं कमेण कदुअ गदे दिअहे अहेदुअ-करुणेण णिच्चाणन्दस्स छब्भुअं रूअं तेण दंसिदम् (२)।

विरा। कीदृशं तत्।

भक्तिः। संस्कृतेन।

भुजाभ्यामुभाभ्यां दधंश्चारुवंशीं
चतुर्भिर्गदाशङ्खचक्राम्बुजानि।
किरीटञ्च हारांश्च केयूरके च
स्रजं वैजयन्तीं मणिं कौस्तुभञ्च॥

अपि च।

अनाहार्य्यसौन्दर्य्यमाधुर्य्यधुर्य्यं
महौदार्य्यचातुर्य्यगाम्भीर्य्यशौर्य्यम्।

---

(१) ततस्तथा निगदन्नेव स देवस्तैर्मदिरा-मोद-मुदित-लोल-लोहित-लोचन एक-कर्ण-तट-ताण्डवित-कुण्डलः शशि-मण्डल-पाण्डरः स एव गौरचन्द्रोऽविषयं स्वयमेव तालाङ्कोऽलं कौतूहलेन सम्भूतः। तदा तच्चरिताहित-नव-नव-गीतपदानि यागद्भिस्तैर्नर्त्तितो बहुतरमीडितोऽपि क्षणं विस्मयकारी संवृत्तः।

(२) एवं बुद्ध-वराह-नरसिंह-मुख्यतरावतारानुकारं क्रमेण कृत्वा गते दिवसे अहैतुककरुणेन नित्यानन्दस्य षड्भुजं रूपं तेन दर्शितम्।

अवैधुर्य्यं धैर्य्यं सदा सौकुमार्य्यं
महस्तुर्य्यमार्य्यं तदाश्चर्य्यमासीत् ॥

विरा। ततस्ततः।

भक्तिः। तदो तं रूअं पेक्खिअ परमाणन्द-णिप्फन्दो उअञ्चिद-रोमञ्च-कञ्चुओ बहुदरं त्थुवन्तो आसि णिच्चाणन्दो। जहा (१)

हरिस्त्वं हरस्त्वं विरिञ्चिस्त्वमेव
त्वमापस्त्वमग्निस्त्वमिन्दुस्त्वमर्कः।
नभस्त्वं चितिस्त्वं मरुत्त्वं मुरारे
नमस्ते नमस्ते समस्तेश्वराय ॥

अपि च।

भुजैः षड्भिरेभिः समाख्याति कश्चि-
न्निसर्गोग्रषड्वर्गहन्तेति भोस्त्वाम्।
वयं ब्रूमहे हे महेच्छ त्वमेभि-
श्चतुर्व्वर्गदो भक्तिदः प्रेमदश्च ॥

विरा। अहो अत्यद्भुतमिदम् ततस्ततः।

भक्तिः। तदो ईसरभावो दाव ईदिसो तस्स कधिदो। पेम्मावेसो सुणीअदु। एत्थ पुरे तिसविहाज्जेव पुरिसाओ।

---

(१) ततस्तद्रूपं प्रेक्ष्य परमानन्द-निस्यन्द उदञ्चित-रोमाञ्च-कञ्चुको बहुतरं स्तुवन् आसीत् नित्यानन्दः। यथा

केवि अणुरत्ताओ केवि मज्झमाणुरत्ताओ केवि णाणुरत्ताओ णावि विरत्ताओ। विज्झत्थिणो हि णअरविहीए अप्पाणअं ओवारिअ सुरणई-सिणाणं कदुअ त्थिमिद-णिअ-वसणं च्चेअ आअच्छन्तं पेक्खिअ कोवि मडुरतरं भअवदो णामपदं कोवि सरसतरं भाअवद-पज्जं कोपि पेम्म-पडिपसं ललिदतर-गीदं सुणावेदि। तदो तं सुणन्तोज्जेव मग्ग-मज्झम्मि भूदले णिवडिअ त्थिमिद-वसण-णिवडन्त-जल-कद्दमिद-पुहवीदन-णिवडण-कद्दमिद-सव्वङ्गो वास्प-सलिलेहिं सीमन्तिद-वच्छत्थल-कद्दमो आणन्द-भेम्भलदाए लदाए बद्धो विअ विज्जुद्दाम-दाम-पुञ्जो विअ लुठन्तो वट्टेदि (१)। तधाविहं पेक्खिअ ते सद्द-अराओ चावल-दोस-दुसिदाओ हसन्तो कोदूहलं कुणन्ति। मुहुत्तन्तरे णिअ-परिअणाओ उत्थाविअ पुणो सुरणईं लम्भिअ पक्खालिद-सव्वङ्गं सिणावेन्ति। एदं

---

(१) तत ईश्वरभावस्तावदीदृशस्तस्य कथितः। प्रेमावेशं शृणुत। अस्मिन् पुरे त्रिविधा एव पुरुषाः। केपि अनुरक्ताः केपि मध्यमानुरक्ताः केपि नानुरक्ता नापि विरक्ताः। विद्यार्थिनो हि नगरवीथ्याम् आत्मानम् उत्तार्य सुरनदीस्नानं कृत्वा स्तिमित-निज-वसनं चेमम् आगच्छन्तं प्रेक्ष्य कोऽपि मधुरतरं भगवतो नामपदं कोऽपि सरसतरं भागवत-पद्यं कोऽपि प्रेमपरिपक्वं ललिततर-गीतं श्रावयति। ततस्तं शृण्वन्नेव मार्गमध्ये भूतले निपत्य स्तिमित-वसन-निपतज्जल-कर्द्दमित पुरवीथीनिपतन-कर्द्दमित-सर्व्वाङ्गो वास्प-सलिलैः सीमन्तित-वक्षःस्थलकर्द्दम आनन्द-विह्वलतया लतया बद्ध इव विद्युद्दाम-दाम-पुञ्ज इव लुठन् वर्त्तते।

सुणिअ णिअ-तणअस्स णअस्स वइवसिअं अणुभवइ तस्स जणणी जण-णीदि-विसारदावि (१)।

विरा। अहो प्रेमानन्दवैवश्यमवश्यमस्य।

भक्तिः। अवरस्सिं वासरे वासरेस-सहस्स-सरिस-महा-महानन्द-परवसो आचारिअ-रअण-पुर-रअण पुरदो णच्चिअ णिअ-घरं आअच्छन्तो मग्ग-मज्झम्मि केणावि बह्मण-बन्धुणा बन्धु-णाहो णिअ-अणस्स देओ दिट्ठो। दिट्ठिय तं सो सव्वङ्ग-गलन्त-सित्तो-सकाउ वाअं उवाअं असं ण पेक्खिअ किम्पि गदन्तो आसि। भो भो शचीपुत्तअ विस्सम्भर भवन्तं पभवन्तं परमं पुरिसं सव्वे णिअदन्ति। दन्तिवर-विक्कम-विक्कम-वैभवं तुह बहुतरंज्जेव णिरूपेन्ति। जइ मज्झ पाम-रस्स एसो गओ गओ करिज्जइ तदो सच्चंज्जेव तुमं भू-मङ्गल-रूओ ईसरो सरोअ-णअणो सअंज्जेव (२)।

---

(१) तथाविधं प्रेच्य ते सहचरास्वापल-दोष-दूषिता हसन्तः कौतूहलं कुर्व्वन्ति। मुहूर्त्तान्तरे निज-परिजना उत्थाप्य पुनः सुरनदीं लम्भयित्वा प्रचालित-सर्व्वाङ्गं स्नापयन्ति। इदं श्रुत्वा निज-तनयस्य नयस्य वरिवसितमनुभाव्य तस्य जननी जन-नीति-विशारदापि।

(२) अपरस्मिन् वासरे वासरेश-सहस्र-सदृश-महा-महानन्द-परवश आचार्य्य-रत्न-पुर-रत्न पुरतो नर्त्तित्वा निज-गृहमागच्छन् मार्ग-मध्ये केनापि ब्राह्मण-बन्धुना बन्धु-नाथो निज-जनस्य देवो दृष्टः। दृष्ट्वा तं स सर्व्वाङ्ग-गलन-सिक्तः सकाकु वाचम् उपायम् अन्यं न प्रेच्य किमपि गदन् आसीत्। भो भोः शचीपुत्र विश्वम्भर भवन्तं प्रभवन्तं परमं पुरुषं सर्व्वे निगदन्ति। दन्तिवर-विक्रम-विक्रम-वैभवं तव बहुतरमेव निरूपयन्ति। यदि मम पामरस्य एष गदोगतः क्रियते तदा सत्यमेव त्वं भू-मङ्गलरूप ईश्वरः सरोज-नयनः स्वयमेव।

विरा। ततस्ततः।

भक्तिः। तदो भअवदा जादानुकम्पेण कम्पेण रोमञ्चेण अ विलसन्त-देहं तं बम्हणपाशं पाशं मिच्चुणो उवगदं लक्खीकदुअ णिअदिदम् (१)। अये यस्तावदीश्वरः स खलु दुष्प्राप्प एव सर्व्वेषां किमिति मामुपालभसे। किन्तु तवास्य रोगस्योपशमोपाय एको वर्त्तते। तच्चेदाचरसि तदाऽयं गमिष्यति नात्र सन्देहो देहोऽयं तव पूर्व्वतोऽपि समीचीन एव भवितुमर्हति।

विरा। ततस्ततः।

भक्तिः। तदो बह्मणबन्धुणा पफुल्ल-लोअणेण गदिदम् (२)। देव कोऽसो उवाओ तदो पहुणा भणिदं णिदंसण-रूअं किम्पि (३)। अये द्विजबन्धो बन्धोरखिलजगतां गताङ्गःसङ्गानां भगवतः प्रेम-परायणानां प्रधानतमोऽयमद्वैताचार्य्यः। अस्य चेत्पादोदकं पिबसि तदा पापकृतोऽयं गदो हेत्वभावे हेतुकाभाव इति दूरीभविष्यति।

तदो बह्मणेण गदिदम्। तुह दंसणादोज्जेव गमिस्सदि किं उण कधिदेण उवाअ-विसेसेणेत्ति। तस्स प्पच्चावदो तधा-

---

(१) ततो भगवता जातानुकम्पेन कम्पेन रोमाञ्चेन च विलसद्देहं तं ब्राह्मणपाशं पाशं मृत्योरुपगतं लक्षीकृत्य निगदितम्।

(२) ततो ब्राह्मणबन्धुना प्रफुल्ललोचनेन गदितम्।

(३) हे देव कोऽसौ उपायस्तदा प्रभुणा भणितं निदर्शनरूपं किमपि।

किदे सदि पुव्वदोवि समीचीण-देहो सो संवुत्तो (१)।

विरा। किं चित्रमिदं तस्य भगवतः। तत्कथय क्व गच्छन्तीच्छन्ती च किं तत्र भवती भवती यत इयं छायामात्रसहचरी चरीकर्त्ति त्वराम्।

भक्तिः। अज्ज अज्जउत्तो सिरिवास-वास-मज्झम्मि आअदेण अद्दैअदेएण सद्धं किम्पि णिव्विरह-रहस्स-वुत्तन्तं कुणन्तो वट्टदि। तं अणुसरिदुं तुवरेमि (२)।

विरा। भगवति तृतीयप्रश्नस्योत्तरमवशिष्यते शिष्यतेयं भगवत्या मम। तदनुशाधि मां स किं मदाश्रयो भविताऽविता वा किं माम्।

भक्तिः। संस्कृतेन। अथ किम्।

आनन्दोऽपि च मूर्त्तो व्यापी च तथा परिच्छिन्नः।
तद्वन्नित्यविलासोऽपि च वैराग्याश्रयो भगवान्॥

तदेहि सहैव गच्छावः। इत्युभौ निष्क्रान्तौ।

ततः प्रविशत्यासनस्थो भगवान् विश्वम्भरोऽद्वैताचार्य्यश्च परितः श्रीवासादयश्च।

भगवान्। सपरिहासं अद्वैतं प्रति। सीतापतिर्जयति लोकमलब्धकीर्त्तिः।

---

(१) ततो ब्राह्मणेन गदितम्। तव दर्शनादेव गमिष्यति किं पुनः कथितेन उपाय-विशेषेणेति। तस्य प्रभावतस्तथा कृते सति पूर्व्वतोऽपि समीचीन-देहःस संवृत्तः।

(२) आर्य्ये आर्य्यपुत्र श्रीवास-वास-मध्ये आगतेन अद्वैतदेवेन सार्द्ध किमपि निर्विरह-रहस्य-वृत्तान्तं कुर्व्वन् वर्त्तते। तमनुसर्त्तुं त्वरयामि।

अद्वै। कुतोऽत्र रघुनाथो नाथो हि यदूनामयमुज्जृम्भते। तत्र भवान् भगवान्।

भगवान्। अद्वैत तव बिच्छेद-च्छेदकर उपायो निरपायो निरवधि मया चिन्त्यते। येन निरन्तराया निरन्तरा सह-वसतिः स्यात्।

श्रीवा। देव यद्यपि शान्ति-पुरवास एवाद्वैतोपयोगी तथापि नवानां भक्तीनां द्वीप इवेति नवद्वीपे चरणाविर्भावावधि अत्रै-वाद्वैत-पक्षपातः। तेन व्यापको नित्यानन्दश्चात्र।

अद्वै। अतोऽत्र श्रीवासः।

श्रीवा। सा तु तिरोभूतैव।

भगवान्। श्रीविष्णुभक्तिः सा भवतु सतु वर्त्तत एव।

अद्वै। इदानीं सैव विष्णुप्रिया।

भगवान्। अथ किं सत्सु ज्ञानादिमार्गेषु भक्तिरेव विष्णोः प्रिया।

अद्वै। अत एव भगवानपि तामङ्गीचकार।

नेपथ्ये भो भो विश्वजनन्या शचीदेव्या निगद्यते।

अद्वैतस्यान्यत्र विश्रामस्थली न कार्य्या। ममैवालयो विश्र-मणीयो मणीयोग इव स्वयं वृत्तः। आकर्ण्य। यथाऽऽज्ञापयति विश्वजननी। तदुच्यतां सद्यैवाद्य भोक्तव्यं भगवता विश्वम्भ-रेणाभरेण हर्षस्य मन्थरोऽयं मे देहः।

श्रीवा। तन्ममापि मापितव्यं तत्र भोजनम्।

भगवान्। तर्हि परिश्रमोऽस्य महान् भविता वितानेन पाकस्य।

अद्वै। अस्येति किमुच्यते अस्या इत्युच्यताम्।

इति कञ्चिदात्मनीनं तत्र प्रेषयति। स च इङ्गितं बुद्धा निष्क्रान्तः।

अद्वै। श्रीवासस्य कर्म्म लगति।

भगवान्। किमाह्वाचार्य्य आर्य्यः।

श्रीवा। नित्यानन्देन देवस्य षड्भुजं रूपमवलोकितं तद्भवते दर्शनीयमिति स्वरूपदर्शनाय यदङ्गीकृतं मह्यं मह्यं तत्कथं न दर्श्यते भगवताऽवताऽदृष्टं मे कीदृशमिति।

नेपथ्ये। भो भोः षड्भुजं रूपमवलोकितम्।

भगवान्। सावहित्थम्। मम स्वरूपमिदमेव। यदिदमद्वैतप्रेमपात्रम्।

अद्वै। स्वगतम्। किमत्र ब्रूमहे महेच्छं प्रति यदि तवैतदेव स्वरूपं तदा दर्शनीयम्। श्यामसुन्दर-विग्रहाभिलाषो विश्रान्तः। यदि स एव स्वरूपमित्युच्यते तदास्मिन् प्रेमहानिः।

इति चर्णं परामृशति।

श्रीवा। अस्माकमिदमेव भवद्वपुः प्रेमपात्रमत्र कः सन्देहः। किन्तु स्वयमेवोक्तं "तद्भवते दर्शयिष्यामि" इति कृत्वाऽसौ निवेदयति।

भगवान्। उन्माद-दशायां केन किं न भण्यते।

श्रीवा। भगवन् अन्योन्मादस्तु व्याधिरेव। अयन्तु तवोन्मादो द्रष्टृ-श्रोतॄणामपि व्याधि-निर्म्मूलकः। किञ्च जीवस्तु वस्तुतः क्षुद्रानन्देनापि विलुप्तधीरधीर एव भवति। ईश्वरस्य त्वानन्द-

स्वरूपत्वात् ज्ञानस्वरूपत्वाच्च किं केन बाध्यताम्। तेन स्वाधीनाऽऽनन्दः स्वाधीन-ज्ञानश्चाऽयम्।

भगवान्। सस्मितम्। तत् खलु मदधीनं न भवति यन्मया दर्शयिष्यते। स्वयमेव भावचक्षुषा दृश्यताम्। इति तदन्तःकरणे स्वरूपमाविर्भावयति।

अद्वै। चक्षुषी निमील्य प्रणिधानं नाटयति।

श्रीवा। चिरं निर्वर्ण्य। अहो चित्रम्। अद्वैतोऽद्वैतोपरि परिवर्त्तते। तथा हि

यद्बाह्येन्द्रियवृत्तयोऽस्य गलिताः स्वानन्दसान्द्रो लयः
कोऽप्यन्तःकरणस्य हन्त नितरां स्पन्देन मन्दं वपुः।
आत्माप्येष लयं ययावनुभवाऽऽस्वाद्ये परे वस्तुनि
प्रायोऽयं श्वसितीति बोधविषयं प्राप्नोति रोमोद्गमैः॥

भगवान्। एवमेव तदास्वाद-सम्बादः।

श्रीवा। भगवन् तवैव नाट्यमिदम्। वहिर्न दर्शितमस्माभिरपि न दृश्यते। इति भवतु अस्माकं तवैतदेव स्वरूपं महाधनम्। किन्त्वधुना धुनातु भवान्। माऽतःपरं परन्तप चेतोऽस्य तिरोधापयान्तःकरणतोऽस्य तद्रूपम्। अन्यथा समाधिसमा धिषणाऽस्य न परं वहिश्चारिणी भविष्यति। पृच्छामश्चैतं किं दृष्टमिति।

भगवान्। स्वयमेवासौ प्रबोध्यताम्। इति तदन्तःकरणात्तद्रूपं तिरोधापयति।

अद्वै। हृदि स्फुरद्रूपं तत्किमप्यनालोकयन् सुप्तोत्थित इव चक्षुषी उन्मील्य क्षणं तदेव पश्यन्निव दशां कामप्यभिनयति।

भगवान्। अद्वैत किमीह्यते।

अद्वै। स्वप्नायमान इव ग्रहग्रस्त इव किमपि पठति।

अकस्मादुन्मीलन्नवकुवलयस्तोमसुरभि-
र्घनश्रेणीस्निग्धः स्तवकिततमालावलिघनः।
प्ररोहन्नीलाश्मव्यतिकरविशेषोज्ज्वलतरो
महःपूरः कोऽयं नयनपदवीं चोरयति नः॥

अपि च। प्रश्यामचित्किरणमण्डलमध्यवर्त्ति-
प्रत्यङ्गकं मधुरिमामृतपूरपूर्णम्।
वंशीकलक्वणितकेलिकलाविदग्ध-
माद्यं महो घनसहोदरमाविरास्ते॥

श्रीवा। अहो वर्त्तमानप्रयोगादतीतमपि प्रत्यक्षम्मन्यमानोऽयं निगदति।

भगवान्। आनन्दस्य वर्त्तमानत्वात्। तदाकर्णय भूयोऽपि विवक्षुरयं सर्व्वे तूष्णीं तिष्ठन्तु।

अद्वै। सुश्यामदीर्घघनकुञ्चितकेशपाशं
सुभ्रूलतं स्वलकमुन्नतचारुनासम्।
आलोलशोणविपुलायतनेत्रपद्मं
बन्धूकबान्धवसुरेखशुभाधरोष्ठम्॥
श्रीवत्सकौस्तुभरमासुषमासमेत-
वक्षःस्थलस्खलदुदारसुतारहारम्।
आपादलम्बिवनमाल्यसुपाल्यमानं
सद्वृत्तदीर्घतरपीवरबाहुदण्डम्॥

श्रीवा। कथमकस्मादस्यैवमभिनिवेशो जातः।

भगवान्। श्रूयताम्।

ध्यानाभ्यासकृता स्फूर्त्तिः स्फूर्त्तिः सा तु चिराद्भवेत्।
याऽऽकस्मिकी हृदि हरेः साऽवतार इवाऽपरः॥

श्रीवा। एवमेव। "सकृद्यद्दर्शितं रूपमेतत् कामयतेऽनघ" इति नारदस्य प्राग्जन्मनि दर्शितमित्यवतारसूचकम्। ध्रुवस्य त्वभ्यासकृता स्फूर्त्तिः। किन्तु भगवन् विना चिराभ्यासयोगेन कथं भगवत्-प्रकाशयोग्यताऽन्तःकरणस्य।

भगवान्। अवधेहि।

पुरोऽनुग्रह एवास्य स्वोदयाधारधावनः।
उदयात् पूर्व्वमर्कस्य विनिहन्ति तमोऽरुणः॥

श्रीवा। किमयमद्यापि साक्षादेव वीक्षते किम्वेक्षितमनुवदति।

भगवान्। पृच्छ्यताम्।

श्रीवा। अद्वैतं प्रति। भो भो महानुभाव किं पश्यसि किम्वा दृष्टमनुवदसि।

अद्वै। आनन्दाब्ध्युत्थित इव किञ्चिद्वाह्यमवगाह्य।

अस्माद्विभोर्वहिरुपेत्य महोऽतिनील-
मन्तर्ममाविशदहो क्षणतस्तिरोऽभूत्।
तेनातिदुःखितमना वहिरात्तदृष्टिः
पश्यामि तत् पुनरिहैव निमग्नमासीत्॥

श्रीवा। सोल्लासम्। भगवन् फलितमस्मद्वचः।

भगवान्। तन्द्रा-दोषोऽयमस्य।

श्रीवा। आनन्द-तन्द्रा खल्वियं कुतोऽस्य दोषः।

भगवान्। अद्वैतं प्रति। अद्वैत जाग्रत्स्वप्नोऽयं भवतः।

अद्वै। साभ्यसूयमिव।

नवकुवलयदामश्यामलो वामजङ्घा-
स्थिततदितरजङ्घः कोऽपि दिव्यः किशोरः।
त्वमिव स स इव त्वं गोचरो नैव भेदः
कथय कथमहो मे जाग्रतः स्वप्न एषः॥

भगवान्। अद्वैत तवैवायं वासनाऽवगाढो दोषः। यतस्त्वमेवैवं पश्यसि नापरः कोऽपि।

श्रीवा। क एवंविधभाग्यवानास्ते यस्त्वां तथा पश्यतु।

भगवान्। सोपहासम्। श्रीवास भवानपि अद्वैतपथ-पतितोऽभूत्।

श्रीवा। कृष्णेन सह तवाद्वैतं यत् तत् पथ-पातिन एव वयम्। कोऽत्र सन्देहः।

भगवान्। एवञ्चेत् भवतोऽपि तेन सहाद्वैतम्।

श्रीवा। भगवन् मैवं वादीः। त्वच्चरणारविन्द-मकरन्द-कणाऽऽस्वाद-भाजां नैष पन्थाः।

भगवान्। तर्हि मयि कथं तदारोपयसि।

श्रीवा। न हीदमारोपणं स्वभावोऽपि भावो नापह्नोतुं शक्यते। किन्तु नायमद्वैताचार्य्यस्य दोषः। अपि तु तवैव। यतस्त्वयोक्तं "तद्भवते दर्शयिष्य" इति। नेपथ्ये। सत्यं सत्यम्।

श्रीवा। जितमस्माभिः। यदिदं दैववच इव नरेङ्गितमभूत्। पुनस्तत्रैव। अये सत्यमेव शचीदेव्या कृतपाकक्रियया तनयेन सममद्वैतागमनं प्रतीक्ष्यते। गगनमध्यमध्यारूढश्चायं भगवान् मार्त्तण्डः।

श्रीवा। श्रुतिमभिनीय। माऽतःपरमत्र विलम्बनीयम्। भोः कथय विश्वजनन्यै। एते वयं श्रीविश्वम्भरेण सममद्वैतादयश्चलिता। इति सर्व्वे यथायथं निष्क्रामन्ति। इति निष्क्रान्ताः सर्व्वे।

सर्व्वावतारदर्शनो नाम द्वितीयोऽङ्कः॥

---

## तृतीयाङ्कः।

ततः प्रविशति मैत्री।

मैत्री। हद्धी हद्धी पराणमेत्त-उव्वरिओ जो एक्को अम्हवंसस्स कडम्बो विराओ जीवदित्ति सुदं। तं ण आणे कहिं वट्टदि। अहंपि जंनाममेत्तेण जीवामि। मंपि सो ण आणेदि। ताउद्देसं करेमि। इति परितो विलोक्य (१)। अम्मो का इयं परदो आअच्छदि (२)। संस्कृतमाश्रित्य।

आनन्दमूर्त्तिरमृतद्रववत् समन्ता-
दङ्गप्रभा तत इतः सरसा किरन्ती।
आसादयन्त्यतितरां करुणाकटाक्षै-
रन्तर्विशुद्धिमखिलस्य पुरोऽभ्युपैति॥

---

(१) हा धिक् हा धिक् प्राणमात्रमुद्वृत्तो य एकोऽस्मद्वंसस्य कडम्बो विरागो जीवतीति श्रुतम्। तं न जाने कुत्र वर्त्तते। अहमपि यन्नाममात्रेण जीवामि। मामपि स न जानाति। तदुद्देशं करोमि।

(२) अहो का इयं पुरत आगच्छति।

इति सविस्मयमालोकयति। ततः प्रविशति।

प्रेमभक्तिः। पुरोऽवलोक्य। अहो केयम्।

नामैकमात्रं वपुरादधाना
विम्लानकान्तिः परितोषहीना।
सोत्कण्ठमस्मन्मुखमीक्षमाणा
शनैः शनैर्मत्पुरतोऽभ्युपैति॥

मैत्री। निपुणं निभाल्य। अम्महे इयंज्जेव पेम्मभत्ती-जननी कहिएण लक्खणेण लक्खीअदि। ता उपसप्पिअ पणमामि (१)। इत्युपसृत्य। देवि वन्दिज्जसि मेत्ती-णामधेआए मए (२)।

प्रेम। सचमत्कारम्। कथं मैत्री त्वमसि। एहि वत्से एहि इत्यालिङ्ग्य। मैत्रि कथय कथमेकाकिनी दुरवस्थिता भ्रमसि।

मै। कलि-परिअणेहिं णिज्जिदेसु अम्ह-सपक्खेसु भअ-भेम्हलिदा जीविदं गेह्णिअ पलाइदा। अदो मे दुरवत्थं किं पुच्छसि (३)।

प्रेम। वत्से निर्भयमतःपरं स्थीयतां मत्सङ्गेनैव। तव माता-महभगिन्यस्मि।

मै। कहं विअ (४)।

---

(१) अम्ब हे इयमेव प्रेमभक्ति-जननी कथितेन लक्षणेन लक्ष्यते। तस्मादुपसर्प्य प्रणमामि।

(२) देवि वन्द्यसे मैत्री-नामधेयया मया।

(३) कलिपरिजनैर्निर्जितेषु अस्मत्सपक्षेषु भयविह्वलिता जीवितं गृहीत्वा पलायिता। अतो मे दुरवस्थां किं पृच्छसि।

(४) कथमिव।

प्रेम। आमूलमाकलय।

भगवदनुग्रहनामा जनको भगवज्जनासक्तिः।
जननी तयोस्तु समयेऽजनिषत भूरीण्यपत्यानि॥

अपि च।

एको विवेकनामा तनयो बह्व्यस्तु भक्तिसंज्ञिकाः कन्याः।
तस्य विवेकस्य सुमतेरनस्ूया नाम दुहिताऽऽसीत्॥

अपि च।

अनसूया समभावं पतिमासाद्य स्वभावजं प्रौढम्।
मैत्रीमसूत पुत्रीं भवतीं मत्तोषसन्धात्रीम्॥

अपि च।

कन्यकाः सरसनीरसभावादाययुर्द्विविधतां प्रथमं ताः।
नीरसास्तु बहुधा गुणयोगाद्भेजिरेऽथ दशतां रसभाजः॥
उज्ज्वलाद्भुतशमाश्च हसश्च प्रेम वत्सल इतीह रसाः षट्।
उत्तमा इति तदाश्रयभाजो भक्तयश्च षडमूरतियोग्याः॥

मै। चरमा हि पेम्म-रसभत्ती (१)।

प्रेम। अथ किम्। तथा हि

सर्व्वे रसाश्च भावाश्च तरङ्गा इव वारिधौ।
उन्मज्जन्ति निमज्जन्ति यत्र स प्रेमसञ्ज्ञकः॥
खण्डानन्दा रसाः सर्व्वे सोऽखण्डानन्द उच्यते।
अखण्डे खण्डधर्म्मा हि पृथक् पृथगिवाऽऽसते॥

---

(१) चरमा हि प्रेम-रसभक्तिः।

एष ते व्याख्यातो निजान्वयः।

मै। देवि दाणिं तुमं एआइणी कहिं वच्चसि (१)।

प्रेम। मैत्रि अस्माकमाश्रयभूतस्य भगवतः कस्यापि श्रीविश्वम्भरस्य विहितसर्व्वावतारलीलस्य सम्प्रति वृन्दावनेश्वरी-भावमनुचिकीर्षोरनुज्ञया सकल-लोकस्य हृदय-शोधनाय साधयामि।

मै। कहिं (२)।

प्रेम। यत्र खलु तद्भाव-भावुक-सुभगम्भावुकतया सर्व्व-भुवन-प्रियम्भावुकस्य तस्य तन्नृत्यानुकरणं भविष्यति।

मै। सोज्जेव को पदेसो (३)।

प्रेम। आचार्य्यरत्नस्य पुराङ्गणम्।

मै। कधं दाव ईसरो भविअ इत्थीभावेण णच्चिस्सदि (४)।

प्रेम। बाले न जानासि। ईश्वरः खलु सर्व्वरसः। सर्व्वेषां भक्तानामाशयानुरोधाद्विचित्रामेव लीलां करोति। स्व-स्व-वासनानुसारेण भक्तास्तान्तामनुकुर्व्वन्ति। अतः केषाञ्चिन्निभृतानां भागवतानां चेतसि तद्भावमावेशयितुं सर्व्वोत्तमां तदनुकारलीलां करिष्यति। यतः परमन्यत् सरसन्नास्ति।

---

(१) देवि इदानीं त्वं एकाकिनी कथं व्रजसि।

(२) कथम्।

(३) स एव कः प्रदेशः।

(४) कथं तावत् ईश्वरो भूत्वा स्त्रीभावेन नर्त्तिष्यति।

मै। कधेहि तं णच्चं किं अङ्करूवं किम्बा पइणाअं (१)।

प्रेम। अङ्करूपमेव।

मै। कधेहि को कस्स भूमिअं गह्विस्सदि (२)।

प्रेम। वत्सेऽवधारय। अद्वैतस्य रुद्रत्वेनात्मत्वं स्वस्य च श्रीराधास्वरूपग्रहणमन्यजनाशक्यं परम-रहस्यत्वेनायोग्यञ्च मत्वा।

अद्वैतमापादयदीशवेशं
स्वयञ्च राधाकृतिमग्रहीत्सः।
इति प्रतीतिः किल वस्तुतस्तु
स एव देवो द्विविधो बभूव॥

अद्वैतो वेशमात्रेण केवलं चरितार्थताम्।
अगमत् किन्तु तत्रासीदाविर्भूतः स्वयं हरिः॥

अपि च। हरिदासः सूत्रधारो मुकुन्दः पारिपार्श्वकः।
वासुदेवाचार्य्यनामा नेपथ्यरचनाकरः॥

श्रीराधाकृष्णसंयोगकारिणी जरतीव सा।
योगमाया भगवतो नित्यानन्दतनुं श्रिता॥

मै। समाइआओ केऽमी (३)।

प्रेम। अधिकारिणो ये अस्मिन्नर्थे स्वयमेव भगवानवादीत् प्रागेव। यथा

---

(१) कथय तन्नृत्यं किमङ्करूपं किम्बा परिणायम्।
(२) कथय कः कस्य भूमिकां ग्रहिष्यति।
(३) समाजिकाः के अमी।

हे श्रीवास स्वयमवहितेनाद्य भाव्यं त्वयास्मिन्
योग्यो यः स्यात् स विशति यथा नापरस्तद्विधेयम्।

इत्युक्ते श्रीवासेनाभाणि। देव कस्मिन् कर्म्मणि योग्यायोग्यव्यवस्था करणीया। कुत्र वा प्रवेशः कारयितव्य। इति पुनर्देवेनाप्यवादि।

श्रीराधाऽत्र स्वयमियमहो नूनमाचार्य्यरत्न-
स्यावासस्याङ्गणभुवि रसाद्व्यक्तमाविर्भवित्री॥

मैत्री। तदो तदो (१)।

प्रेम। ततः श्रीवासेन मनसि सन्दिहानेन भगवद्वच इति विहितनिश्चयेनापि गङ्गादासनामा भगवतः परमाप्तो भूसुरवरो द्वारपालत्वेन न्ययोजि।

मै। तदो तदो (२)।

प्रेम। भगवता पुनरपि श्रीवासो निजगदे। श्रीवास भवता नारदेन भवितव्यम्। शुक्लाम्बरेण तव स्नातकेन भाव्यम्। गाथकाः श्रीरामादयस्तव सहोदरास्त्रयः। आचार्य्यरत्नविद्यानिधी चेति देवेनैव नियोजिताः। अतः परं न केषामपि तत्र प्रवेशः। किन्तु श्रीवासादि-सहोदर-वधूभिः सहाचार्य्यरत्न-मुरारि-वधू-प्रभृतयः प्रागेव तत्र प्रविश्य स्थिता अधिकारभाजश्च ताः। नेपथ्ये। मृदङ्गतालादिध्वनिः।

---

(१) ततस्ततः।
(२) ततस्ततः।

प्रेम। वत्से श्रुतम्। अयमारब्धः पूर्व्वरङ्गाङ्गभूतः प्रत्याहारः।

पुनर्नेपथ्ये।

जयति जननिवासो देवकीजन्मवादो
यदुवरपरिषत्स्वैर्दोभिरस्यन्नधर्म्मम्।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्द्धयन् कामदेवम्॥

अपि च। सम्पूर्णेन्दुमुखी सरोजनयना कोकस्तनी कैरव-
स्मेरा कम्बुशिरोधिरम्बुधिभुवो गर्व्वस्य सर्व्वङ्कषा।
मङ्गल्यैरिह वस्तुभिर्व्विरचिता नान्दीव वृन्दावन-
क्रीडाकौतुकनाटकस्य दिशतु श्रीराधिका वः शुभम्॥

प्रेम। सत्यमेवैतत्। यन्निरटङ्कि मया। यदसौ सूत्रधार-भूमिको हरिदासः श्रीभागवतपद्यं मङ्गलं कुर्व्वन्नान्दीं पपाठ। तन्मन्ये एकाङ्को भाणो व्यायोगो वा रूपकमत्र निरूपयितव्य-मनेन। यतो नेपथ्ये गीयते नान्दीत्यादि तयोर्लक्षणम्। तद्वत्से तवास्य दिदृक्षा वर्त्तते।

मै। कहिं मे तारिसं भाअधेयं (१)।

प्रेम। का ते चिन्ता मया सह वर्त्तितव्यम्। मत्प्रभावात् केनापि भवती न लक्षणीया। त्वदनुरोधान्मयाऽपि त्वन्निकट एव तथा भूत्वा स्थातव्यम्।

मैत्री। अणुगहीदम्हि (२)।

---

(१) कदा मे तादृशं भागधेयम्।
(२) अनुगृहीतास्मि।

प्रेम । तदेहि । इति निष्क्रान्ते ।

प्रवेशकः । ततः प्रविशति गृहीतसूत्रधारभूमिको हरिदासः । कियद्दूरे उपविष्टे अलक्षिताऽऽकारे प्रेमभक्तिमैत्र्यौ च ।

सूत्र । पुष्पाञ्जलिमञ्जलौ कृत्वा ।

भासा भास्वरयन् दिशो विशदया कान्तिं द्विजश्रेणिजां
बिभ्राणः परितोलसत्परिमलः प्रोद्दामसन्तोषभूः ।
भृङ्गः पादसरोरुहे भगवतः पुष्टिं नखेन्दुश्रियां
तन्वन् हास इवैष नाट्यरहसः पुष्पाञ्जलिः कीर्य्यते ॥

इति तथा करोति ।

प्रेम । निर्वर्ण्य । सुविहितमेव विहितं भवता । यद्यपि नेपथ्य-एव नान्दी पठिता तथापि रङ्गपूजाप्रसङ्गेन भगवत्पद एव पुष्पाञ्जलिः कीर्णः । पश्य वत्से पश्य ।

हारी कण्ठे श्रवणयुगले कुण्डली चावतंसी
स्रग्वी भूयस्युरसि भुजयोरङ्गदी कङ्कणी च ।
अप्युष्णीषी शिरसि पदयोर्नूपुरी नाट्यलक्ष्या
मूर्त्तस्तेजोभर इव पुरो हारिदासप्रतीकः ॥

मै । देवि ण क्खु अअं सत्थीओ मग्गो (१) ।

प्रेम । श्रूयताम् ।

शास्त्रीयः खलु मार्गः पृथगनुरागस्य मार्गोऽन्यः ।
प्रथमोऽर्हति सनियमतामनियमतामन्तिमो भजते ॥

---

(१) देवि न खलु अयं शास्त्रीयो मार्गः ।

मै। अणिअद-मग्गेण चलन्तस्स विलम्बेणज्जेव गम्म-लाहो होइ (१)।

प्रेम। इदमनैकान्तिकम्। तथा हि

वन्यासु तरणिसरणिर्जवेन गम्यं नयत्यनियताऽपि।

न सहजकुटिलेषु पुनर्नदीप्रवाहेष्वतिनियताऽपि॥

तदलमनया वार्त्तया शृणुमस्तावत् किमयं प्रस्तौति।

सूत्र। अलमतिविस्तरेण भो भो अद्याहं भगवतः कमलयोने-श्चरणोपकण्ठाद् दैनन्दिन-वन्दनादिकं निर्व्वाह्य निवर्त्तमानो मानोन्नतेन दैवात्तत्रैवोपसीदता नारदेनाऽऽदरेण समादिष्टोऽस्मि। यथा रे रे गन्धर्व्वराज राजमानोऽतिचिराय मम मनोरथो वरीवर्त्ति। भवद्भिर्नरीनृत्यमाना भगवतः श्रीवृन्दावन-विहारिणः काऽपि केलिकौमुदी नयनविषयीकर्त्तव्येति। तद्यथा सम्पद्यतेऽद्य ते तथा कौशलेन भवितव्यम्। तदहं तत्र यतिष्ये। इति पुरतोऽवलोक्य। भो भो इत इतः।

प्रविश्य। पारिपार्श्विकः। किमाज्ञापयसि भाव।

सूत्र। मारिष अद्याहमुपरोधितोऽस्मि तत्र भवता भगवता नारदेन।

पारि। कथमिव।

सूत्र। भगवतः कमलयोनेः-। इत्यादि पठति।

पारि। भाव कथमयमात्मयोनेर्भगवत आत्मजः सनक-

---

(१) अनियतमार्गेण चलतो विलम्बेनैव गम्य-लाभो भवति।

सनन्दनादीनामवरज आत्मारामो ब्रह्मभूतः सतत-ब्रह्मानन्दानुभव-भविक-सुभगम्भावुकः श्रीकृष्णस्य लौकिकीं केलिमनुबद्धतृष्णस्त्वामिदमभ्यर्थितवान्।

सूत्र। अस्ति रहस्यम्।

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्व्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः॥

इति भागवतीया गाथा।

पारि। भवतु नाम भक्तिं कुर्व्वन्तु। कथं लौकिकाचरितेऽनुरज्यन्ति।

सूत्र। मैवं वादीः।

अलौकिकीतः किल लौकिकीयं
लीला हरेरेति रसायनत्वम्।
लीलावतारानुकथाऽतिमृद्वी
विश्वस्य सृष्ट्यादिकलापलिक्री॥

अत उक्तम्। "भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत्" इति साधारण-जन-परमेव। विशेषतस्त्वयं श्रीनारदो वृन्दावन-विनोद-प्रियः। श्रीगोपालमहामनोर्ऋषिरपि तेन युक्तमेवैतत्। तदविलम्बितमेव सम्पाद्यतां पात्रवर्गस्य भूमिकापरिग्रहः।

पारि। भाव क्षणमपेक्ष्यतां यावदसौ मुनिवरः समायाति।

सूत्र। आगतप्राय एव। न खलु तादृशामन्तरीक्षचारिणां पर्य्यटनविलम्बः।

पारि। एवञ्चेत् कः प्रयोगोऽनुष्ठातव्यस्तदप्यनुज्ञायताम्।

सूत्र। गृहीत्वा जरतीभावं या देव्या योगमायया।
सम्पद्यते दानलीला सैव राधामुकुन्दयोः॥

पारि। कथमेषा त्वरितं सम्पादयितुं शक्यते।

सूत्र। कथमिव।

पारि। श्रूयताम्।

तस्मिन् प्रयोगे भवतस्तनूजाः
सर्व्वा विशेषाङ्गणनाप्रवीणाः।

सूत्र। साशङ्कम्। कथय तासां स्वस्त्यस्ति।

पारि। स्वस्त्येव। किन्तु

वृन्दावनं ताः प्रययुः प्रमोदात्
सम्भूय गोपीश्वरपूजनार्थम्॥

सूत्र। किं करोमि कथमेतन् नारदः प्रत्येतु। अहो तदभिशापाङ्गयेन भाव्यम्।

पारि। अलमलं चिन्तया ता अपि समागतप्राया एव।

सूत्र। हन्त मारिष न जानासि।

वर्त्मानभिज्ञाः किल ताः कुमार्य्या
न चोपयुक्तः कतमोऽस्ति बन्धुः।
दानद्रवोत्सिक्तकरः कराल-
स्तम्बेरमो यत्र समेघधामा॥

पारि। भाव अस्ति तासां सङ्गे योगमाया-प्रभावा जरती भवच्छ्वश्रूः।

सूत्र। विहस्य। तदा निश्चिन्त एवास्मि।

या न पश्यति पन्थानं न शृणोति च या वचः।
सा किं करोतु साहाय्यं या जरेव शरीरिणी॥

पारि। मैवं वादीः।

महाप्रभावा खलु योगिनी सा
वयो न तस्या मतिविप्लवाय।
क्रमेण वृद्धा विधुमण्डलीयं
न ग्लायति द्योतत एव कामम्॥

नेपथ्ये। हंहो गन्धर्व्वपते को विलम्बस्तदभिनयस्य।

सूत्र। श्रुतिमभिनीय। मारिष पश्याऽयमुत्कण्ठमानो मुनिवरः सप्रमोदमभिनेष्यमाण-विलोकनार्थं त्वरमाण आगच्छति। अस्माकन्तु न काऽपि सामग्री सम्पद्यते। तदयमितो गत्वा तासामेव कुमारीणामनुसन्धानाय यामः।

पारि। यथारुचितं भवते। इति चर्य्यां नर्त्तित्वा निष्क्रान्तौ।

(प्रस्तावना।)

ततः प्रविशति स्नातकेनानुगम्यमानो नारदः।

नारदः। अये गन्धर्व्वराज किमपरं विलम्बसे। इति तमनुसन्धाति।

प्रेम। वत्से मैत्रि पश्य पश्य।

अंसे निधाय महतीं रणयन् प्रकोष्ठे
वामेतरे वलयवत्कलिताक्षमालः।
विद्युद्विकस्वरविकीर्णजटाकलापः

कैलासकान्तिरयमेति सुरर्षिरग्रे ॥

वल्ल। प्रणमैनम्। महाभागवतोत्तमोऽयं मुनिवरः। यस्य खल्वियं गाथा।

अहो देवर्षिर्धन्योऽयं यत्कीर्त्तिं शार्ङ्गधन्वनः।
गायन् माद्यन्निदं तन्व्या रमयत्यातुरं जगत् ॥

मै। प्रणम्य। देवि तुए भणिदं। सिरिवासो णारदो हुविस्सदि। कहं दाणिं सअंज्जेव णारदो आअओ (१)।

प्रेम। अस्य सहज-नारदाऽऽवेशत्वान्नारदरूपता व्यक्तैव। अद्वैतादेस्तु तत्तदारोपः। तत्त्वया यथादृष्टमेव प्रतीयताम्।

नार। भो भोः स्नातक कथमत्र कोऽपि न दृश्यते।

स्नात। सुरर्षे गन्धर्व्वराजस्तु वृन्दावन एव नर्त्तितव्यमिति तत्रैव ससामग्रीको गतवानस्ति। एहि तत्रैव गच्छावः।

नार। इदं वृन्दावनं न भवति।

स्नात। भो महात्मन् अतिशयहर्षोत्कर्षेण स्वात्माऽपि विस्मृतो भवता। यच्च तथा वृन्दावन-परिचय-चातुर्य्य-धुर्य्योऽपि वृन्दावनं न परिचिनोषि।

नार। भोः स्नातक सत्यमेवोक्तं भवता।

आनन्दोन्मादलुप्तान्तर्वहिष्करणवृत्तयः।
परिच्छिन्दन्तु के सम्यगात्मानं किमुतापरम् ॥

तदादिश तस्य पन्थानम्।

---

(१) देवि त्वया भणितम्। श्रीवासो नारदो भविष्यति। कथमिदानीं स्वयमेव नारद आगतः।

स्नात। भो द्रुत द्रुतः। इत्युभौ नाट्येन परिक्रामतः।

प्रेम। निरूप्य। अहो महाभागवतस्य नैसर्गिकी वृन्दावनरतिः।

नार। नाट्येन कियद्दूरं गत्वा। हन्त भोः।

यत्पारे विरजं विराजि परमव्योमेति यद्गीयते
नित्यं चिन्मयभूमिचिन्मयलता कुञ्जादिभिर्मञ्जुलम्।
सान्द्रानन्दमहोमयैः खगमृगव्रातैर्वृतं सर्व्वत-
स्तद्वृन्दावनमीक्ष्यते किमपरं सम्भाव्यमक्ष्णोः फलम्॥

यत्र स्वयं स्वयम्भूरप्यस्मत्पिता यत्किञ्चिदेव जन्माऽभिलषितवान्। तथा च पौराणिकी गाथा।

तद्भूरिभाग्यमिह जन्म किमप्यटव्यां
यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम्।

इत्यादि। इत्येतदेव पद्यमुपवीणयन्नटति।

स्नात। एवञ्चेत् प्रतिपदमेव भवता प्रेमानन्दविह्वलेन भूयते तदा कथं गम्यताम्।

नार। धैर्य्यमवष्टभ्य। आदिश मार्गम्।

स्नात। द्रुत द्रुतः। इत्युभौ पुनर्नाट्येन परिक्रामतः। नेपथ्ये। मुरलीध्वनिः।

स्नात। देवर्षे इदमेव वृन्दावनम्। यदेष भगवतो मुरलीकल आकर्ण्यते।

नार। श्रुतिमभिनीय। अये सत्यमेवात्थ। तथा हि

मधुरिमसरवापीमत्तहंसोग्रजल्पः
प्रणयकुसुमवाटीभृङ्गसङ्गीतघोषः।

सुरतसमरभेरीभाङ्कृतिः पूतनारे-
र्जयति हृदयदंशी कोऽपि वंशीनिनादः॥

प्रेम। वत्से भगवतः श्रीकृष्णचन्द्रस्य प्रवेशो भविता। तदिदानीं विस्मर्य्यतामाजन्मदुःखम्। सफलीक्रियेताञ्च नयने।

मै। सव्वं तुह्न चरण-पसादादोज्जेव (१)।

नार। निपुणं निभाल्य।

स्नात। सत्यमेव व्रजराजकुमारस्यैव वंशीनिनादोऽयम्।

यतः। वितितिरपि गिरीणां मुञ्चतीवाश्रुधाराम्
पुलकयति तरूणां वीरुधाञ्चैष वर्गम्।
विदधति सरितोऽपि स्रोतसः स्तम्भमुच्चै-
र्हरि हरि हरिवंशीनाद एवोज्जिहीते॥

इत्येतदेव पद्यं पूर्व्ववदुपवीणयन्नृत्यति।

स्नात। यथार्थमेवैतन्नटनम्। यतः

श्रुतिभिरपि विमृग्यं ब्रह्मसम्पत्तिभाजा-
मपि पुरु रसनीयं मूर्त्त आनन्दसारः।
यदहह भविताऽद्य श्रीलशम्भुस्वयम्भू-
प्रभृतिभिरभिवन्द्यं पादपद्मं दृशोर्नः॥

तद्देवर्षे क्षणमपवार्य्य स्थातुं युज्यते। किमसौ सहचरैरेवोपसर्पति किम्बा सौभाग्य-रस-गभीराभिराभीर-भीरुभिरिति सहसोपसर्पणमसाम्प्रतम्।

---

(१) सर्व्वं तव चरण-प्रसादादेव।

नार । सत्यमात्थ तदेवमेव कुर्व्वं । इति तथा स्थितौ ।

ततः प्रविशति कदम्बतरु-काण्ड-कृताऽऽलम्बस्त्रिभङ्गी-ललितो मुरलीं वादयन् कतिपयैः सखिभिः सह श्रीकृष्णः ।

श्रीकृष्णः । सखे रम्यमिदं वृन्दावनस्य सौभाग्यम् । तथा हि

हसन्ती वासन्ती वलितमुकुला बालवकुला
विशोकश्चाशोकः सुलभविचयश्चम्पकचयः ।
अनागः पुन्नागः स्तवककमनः पश्य सुमनः-
कुटीरः पाटीरश्वसनसुरभिर्भाति सुरभिः ॥

वयस्याः । भो वअस्स तुज्झ एदं कीला-काणणं कधं रमणिज्जं ण हुविस्सदि (१) ।

प्रेम । निर्वर्ण्य । अहो किमेतत् ।

अयं नैवाद्वैतो वत न तदिदं वेशरचना-
कलाशिल्पं किन्तु स्वयमिह हरिः प्रादुरभवत् ।
यथार्थं वस्त्वेव प्रथयति चमत्कारमधिकं
यथार्थस्याकारः सुखयति च सन्देहयति च ॥

पुनर्निभाल्य सपरामर्शम् ।

अकृष्णः कृष्णत्वं व्रजितुमसमर्थो हि भवति
स्वयं कृष्णो नानाकृतिकृतिसमर्थोऽपि भवति ।
ग्रहीतुं योग्यः स्यादवयवकलापं ह्यवयवी
कथङ्कारं धत्तामवयवविशेषोऽवयविताम् ॥

---

(१) भो वयस्य तव इदं क्रीडा-काननं कथं रमणीयं न भविष्यति ।

तदयमद्वैत एव न भवति। नाऽपि वेशरचना-कौशलम्। किन्तु स्वयं कृष्ण एवावतीर्णः।

नार। दूरान्निभाल्य सानन्दम्। अहो किमेतत्।

सान्द्रानन्दरसाब्धिमन्थविदितं सद्भक्तगोष्ठ्यां कृपा-
मोहिन्या परिवेषितं रतिमता वृन्देन तत्राभितः।
नानारुच्यनुपानतः प्रतिमुहुः पीतञ्च पूर्णं सदा
नो जीर्य्यत्यपि नोपयाति विकृतिं श्यामामृतं किञ्चन॥

अपि च।

नवजलधरधामा कोटिकामाऽभिरामः
परिणतशरदिन्दुस्निग्धमुग्धाऽऽननश्रीः।
नवकमलपलाशद्रोणिदीर्घारुणाक्षो
दशनकुसुमकान्तिश्रान्तविम्बाधरौष्ठः॥

इत एवाभिसर्पति। तदेहि कुञ्जाऽन्तरितौ भूत्वा पश्यावः।

स्नात। एवमेव। इति तथा कुरुतः।

कृष्णः। सखे सुबल सखे श्रीदामन् सखे सुदामन् कुसुमाऽऽसवो नाम वटुः प्रियसखो मे कथं न दृश्यते। तदेतं मृगयत।

सखायः। यथाज्ञं मृगयाम। इति तदन्वेषणं नाटयन्ति।

प्रविश्याऽपटीक्षेपेण सम्भ्रान्तो विदूषकः। भो वअस्स परित्ताहि परित्ताहि (१)।

---

(१) भो वयस्य परित्राहि परित्राहि।

श्रीकृष्णः। कथं भीत इव लक्ष्यसे।

विदू। वअस्स एआ जोइणी जरदीव्व दीसमाणा दैवोपसस-ललिद-बाल-ललणाओ पच्चसाओ वण-मज्झम्हि आणिअ गोवीसर-पूअणत्थं किदाऽऽरम्भा दिट्ठा। तुह पुस्सेण अहं उव्वरिओ। मं गहिअ णूणं बलिं दास्सदित्ति मे भअं जादं (१)।

कृष्णः। विहस्य। वयस्य सुबल किमेतत्।

सुब। ज्ञातमिहस्थेनैव मया। अद्य खलु गोपीश्वर-पूजनकृते गुरु-जन-कृते गुरु-निवारणेऽपि मातामह्या मह्याऽऽचरणया बलतो बलतो हर्षोत्कर्षतः स्वच्छन्दतो वनगमनाय प्रवर्त्तयिष्यते राधा। तच्च तामेव जरतीमालोक्य योगिनी भ्रान्त्याऽयं वटुर्विभाय। विभाऽऽयता हि सा स्वभावादेव देवमायेव।

विदू। हीही जइबि एव्वं तहबि पिअ-वअस्स-हत्थे णिपडिस्सन्ति सव्वाओ। जं गोउल-वासिणीणं इत्थी-कुरङ्गिणं रङ्गिणं क्खु पिअ-वअस्सस्स गुण-गणो वाउरा-जालो (२)।

नार। भोः स्नातक अतःपरमत्रावस्थातुं न युज्यते। तदेहि योगप्रभावेण नभश्चरौ भूत्वा पश्यावः। इति निष्क्रान्तौ।

---

(१) वयस्य एका योगिनी जरतीव दृश्यमाना दैवोपसन्न-ललित-बाल-ललना पश्यवा वनमध्ये आनीय गोपीश्वरपूजनार्थं कृताऽऽरम्भा दृष्टाः। तव पुण्येन अहमुद्वृत्तः। मां गृहीत्वा नूनं बलिं दास्यति। इति मे भयं जातम्।

(२) हीही यद्यपि एवं तथाऽपि प्रिय-वयस्य-हस्ते निपतिष्यन्ति सर्वाः। यो गोकुल-वासिनीनां स्त्री-कुरङ्गिणीनां रङ्गिणीनां खलु प्रिय-वयस्यस्य गुण-गणो वागुरा-जालः।

नेपथ्ये। हन्त अज्जे केण पहेण गोवीसरं अणुसरेम्ह जदो।
विरइअ ठाणे ठाणे दाणं सो वणगओ धुत्तो॥
कड्ढइ सदालिवग्गं हेला-कण्डूल-करदण्डो (१)।

सुब। वयस्य फलितमस्मद्वचः।

कुसु। मए जं उत्तं वअणं तं किं ण फलिस्सदि। ताअणीअंज्जेव गव्वमुव्वहसि (२)। कृष्णं प्रति। वअस्स तुम्हेवि तेण उज्जमेण चिठ्ठध (३)।

कृष्णः। कोऽसावुद्यमः।

कुसु। ण सुदं विरइअ ठाणे ठाणे इत्यादि जं पढिदं। किंतु वण-गओत्ति जं भणिदं तं उइदंज्जेव। धुत्तोत्ति जं भणिदं तं क्खु मे दुक्खा-अरं (४)।

कृष्णः। विहस्य सावहित्थम्। वन-गजो धूर्त्त इति कथं ते दुःखाकरम्।

कुसु। एत्थ वणे को अवरो वण-गओ (५)। पुनर्नेपथ्ये।
अवगाहिअ उण मग्गं सो विविणे सहअरेहिं कलहेहिं।

---

(१) हन्त आर्य्ये केन पथा गोपीश्वरमनुसरामो यतः। विरचय्य स्थाने स्थाने दानं स वनगजो धूर्त्तः॥ कर्षति सदालिवर्गं हेला-कण्डूल-करदण्डः।

(२) मया यदुक्तं वचनं तत् किन्न फलिष्यति। तदलीकमेव गर्वमुद्वहसि।

(३) वयस्य त्वमपि तेनोद्यमेन तिष्ठ।

(४) न श्रुतं विरचय्य स्थाने स्थाने इत्यादि यत् पठितम्। किन्तु वन-गजेति यद्भणितं तदुचितमेव। धूर्त्त इति यद्भणितं तत् खलु मे दुःखाकरम्।

(५) अत्र वने कोऽपरो वन-गजः।

विहरइ दाण-विणोई हन्त कधं तत्थ गन्तव्वम् (१)॥

कुसु। वअस्स अम्हे कवणं कुञ्जे ओवारिअ चिठ्ठम्ह। जाव इमाओ विस्सत्था हविअ इध आअच्छन्ति (२)।

सर्व्वे। एवमेव। इति श्रीकृष्णेन सह कुञ्जप्रवेशं नाटयन्ति।

ततः प्रविशति पूजोपकरण-पात्र-पाणिभिः सह सहचरीभिर्जर-त्योपगम्यमाना पाण्डु-पत्राऽऽवृता नव-किशलय-श्रीरिव श्रीराधा।

श्रीराधा। सहीओ गोवीसर-पूअणत्थं सव्वोज्जेव सम्भारो आणीदो (३)।

सख्यः। अध इं। किंतु मिलाणं हविस्सदित्ति कुसुमंज्जेव ण आहरिदं। इदोज्जेव अवचिणिस्सं (४)।

राधा। पिअं मे पिअं। ता एहि अवचिणम्ह (५)। इति नाट्येन पुष्पावचयनं नाटयन्ति।

प्रेम। निर्वर्ण्य। अहो चित्रम्। स एवायं देवः। नास्य किम-प्यशक्यम्। यतः

मोहिन्येष बभूव यः स्वकलया देवद्विषो मोहय-
न्नात्मारामपीश्वरेश्वरमपि श्रीशङ्करं लोभयन्।

---

(१) अवगाह्य पुनर्मार्गं स विपिने सहचरैः कलभैः। विहरति दान-विनोदी हन्त कथं तत्र गन्तव्यम्॥

(२) वयस्य वयं क्वाणं कुञ्जे अपवार्य तिष्ठाम। यावत् इमा अपि विश्वस्ता भूत्वा इत आगच्छन्ति।

(३) हे सख्यो गोपीश्वर-पूजनार्थं सर्व्व एव सम्भार आनीतः।

(४) अथ किम्। किन्तु म्लानं भविष्यति इति कुसुममेव न आहृतम्। इत एव अवचयिष्यामः।

(५) प्रियं मे प्रियम्। तदेहि अवचयाम।

तस्याश्चर्य्यमिदं न किञ्चिदपि यत् कृष्णावतारोऽपि सञ्-
श्रीराधाऽऽकृतिमग्रहीत् स्ववपुषा देवः स विश्वम्भरः ॥

अथ वा ।

हरिरयमथ लीलया स्वशक्त्या
विदलयुगात्मकलायवन्न भिन्नः ।
अभवदिव पृथक् पुमान् बधूश्च
स्वयमुभयांशसमानरूपयोगात् ॥

पुनरन्यतोऽवलोक्य ।

इयमपि ललितैव राधिकाऽऽली
खलु न गदाधर एष भूसुरेन्द्रः ।
हरिरयमथ वा स्वयैव शक्त्या
त्रितयमभूत् स सखी च राधिका च ।

पुनरन्यतोऽवलोक्य । अहो इयमपि योगमायाऽगमायाद्-
भ्रमिनी शमिनी नीरजा नीरजाक्षी धवल-वलता केश-पाशेन
तम इव शुद्धसत्त्वीकृत्य दधाना जरतीवेशं विधाय प्रविष्टा ।
नेयं नित्यानन्दतनुः । नित्यानन्दतनुर्भगवान् हि स्वामेव योग-
मायामायापयामास । तस्य तु न चित्रमेतत् । यतः

निवासशय्यासनपादुकांशुको-
पधानवर्षाऽऽतपवारणादिभिः ।
शरीरभेदैस्तव शेषतां गतै-
र्यथोचितं शेष इतीरितो जनैः ॥

इति प्राचीनैर्भक्तैरुक्तम् ।

कृष्णः। राधां निर्वर्ण्य। सखे।

उत्कीर्णा किमु चारु कारुपतिना कामेन किं चित्रिता
प्रेम्णा चित्रकरेण किं स्वर्णिमा त्वष्ट्रैव कुन्दे धृता।
सौन्दर्य्याम्बुधिमन्थनात् किमुदिता माधुर्य्यलक्ष्मीरियं
वैचित्र्यं जनयत्यहो अहरहर्दृष्टाऽप्यदृष्टेव मे॥

अथ वा।

प्रौटीर्य्यं स्मरभूपतेर्मधुमदो लावण्यलक्ष्म्याः स्मयः
सौभाग्यस्य विनोदभूर्मधुरिमोल्लासस्य हासश्रियः।
अद्वैतं गुणसम्पदामुपनिषत्केलौ विलासाऽऽवलेः
केयं लोचनचन्द्रिकाचयचमत्कारश्चकोरेक्षणा॥

इति सस्पृहमालोकयति।

राधा। एहि ललिदे लवङ्गकुसुमं अवचिणुम्ह (१)। इति परिक्रामति।

जरती। एषा लवङ्ग-वाडिआ बि कन्हस्स अदिपेअसी। इमाए णिअडं मा गच्छ। पच्चात् तुमं मोआवेदुं ण सक्किस्सम्ह (२)।

ललि। अज्जे तुमं पडिभूत्तणेण संठाविअ अम्हे अप्पाणअं मोआविस्सम्ह (३)। का चिन्ता। इति सकौतुकं सर्व्वाः कुसुमावचयनं नाटयन्ति।

---

(१) एहि ललिते लवङ्ग-कुसुममवचयाम।

(२) एषा लवङ्ग-वाटिकापि कृष्णस्य अतिप्रेयसी। अस्या निकटं मा गच्छ। पश्चात् त्वाम् मोचयितुं न शक्ष्यामः।

(३) आर्य्ये त्वाम् परिभूत्वेन संस्थाप्य वयम् आत्मानं मोचयिष्यामः।

राधा। ललिदे परित्ताहि परित्ताहि। एषो दुट्ठो भमरो बाधेइ (१)।

सख्यः। मुक्किअ लवङ्ग-लदिअं चवलो मऊसूअणो एसो।
पिअ-सहि अणिअद-पेम्मो तुह मुह-गन्धेण अन्धिओ भमई (२)॥

कृष्णः। अवलोक्य सस्पृहम्। सखे पश्य पश्य।

मुखमनुनिपतन्तं वारयन्ती द्विरेफम्
भयचकितचलाक्षी न्यङ्मुखीयं करेण।
तमपि तदभिभूतं घूर्णितभ्रूर्धुनोते
स च रुजमभिनिन्ये झङ्कृतैः कङ्कणानाम्॥

कुसु। वअस्स अअं ओसरो अम्हाणं। अम्ह-लवङ्ग-कुसुमं एसा आहरेदि। इमाए आहरणं बलं कदुअ तुमं आहर(३)।

कृष्णः। एवंविधमालोकनमेवाऽतिसुरसं तथाऽपि प्रियवटोर्वचोऽनुरोधेन तथा कुर्म्म। इति समुपसृत्य सदर्पम्। अयि ललिते दुर्ललितेऽदुः के तव साहसिक्य-शिक्षामेताम्। कस्ते मदो मदोकसि वृन्दावने कथं स्वातन्त्र्यमारभ्यते। वारम्बारमेव मे वनमागत्य गत्यनवस्थया तत इत इतर-जनोवद् गात्र-गर्व्वेण फल-कुसुम-सुमञ्जुल-लता-विटप-भङ्गमाचरन्त्यस्य परितोऽप-

---

(१) ललिते परित्राहि परित्राहि। एष दुष्टो भ्रमरो बाधते।

(२) मुक्त्वा लवङ्ग-लतिकां चपलो मधुसूदन एषः। प्रिय-सखि अनियत-प्रेमा तव मुख-गन्धेन अन्धो भ्रमति॥

(३) वयस्य अयमवसरोऽस्माकम्। अस्मल्लवङ्ग-कुसुमम् एषा आहरति। अनया आहृतं बलं कृत्वा त्वमाहर।

रितोषं मम जनयन्ति नयन्तिरस्कृत्य मामवजानन्ति च भवत्यः। भद्रमद्य विलोकिताः स्थः। अतः परमस्य फलं भुज्यताम्।

जरती। अरे कन्हड कुसुमेहिंज्जेव एदाणं पओजणं ण क्खु फल-भोअत्थं एदाहिं वण-मज्झे आअदं (१)।

कुसु। अज्जिए वअसेण समं तुज्झ बुद्धी च गदा। जदो फलं अवराहे दण्डोत्ति ण आणासि (२)।

जरती। बम्हण-डिम्ह क्खीर-कण्ठोऽसि। तुमं किं जाणेसि। विचारेहि को अवराहो। अवराहेज्जेव दण्डो ण क्खु सराहासु अम्हेसु (३)।

ललि। अये वडुअ तुम्ह वअस्सो अस्स वणस्स को (४)।

कुसु। ललिदे अहिआरी अअं (५)।

ललि। होइ एवस्सेदं। अहिओ अरी जइ ण होइ तदो कधं अम्ह-पिअ-सहीए एदस्स वणस्स एदारिसी अवत्था (६)।

---

(१) अरे कृष्ण कुसुमैरेव एतासां प्रयोजनम्। न खलु फलभोगार्थमेताभिर्वनमध्ये आगतम्।

(२) आर्ये वयसा समं तव बुद्धिश्च गता। यतः फलं अपराधे दण्ड इति न जानासि।

(३) हे ब्राह्मण-डिम्भ क्षीर-कण्ठोऽसि। त्वं किं जानासि। विचारय कोऽपराधः। अपराधे एव दण्डो न खलु सराधासु अस्मासु।

(४) अये वटुक तव वयस्योऽस्य वनस्य कः।

(५) ललिते अधिकारी अयम्।

(६) भवति एवमेव। अधिकः अरिर्यदि न भवेत् तदा कथं अस्मत्प्रिय-सख्या एतस्य वनस्य एतादृशी अवस्था।

कुसु। ललिदे पण्डिदत्त्वणं पआसेइ। होदु होदु अम्ह-वअस्सो एदस्स वणस्स अहिओ अरीव्जेव। एदं वणं तुम्ह पिअ-सहीए कधं जादं (१)।

ललि। उवभोओज्जेव पमाणं। अणथा कधं णीसङ्कं कुसुमाइं आहरेह्म (२)।

जरती। सच्चंज्जेव भणिदं ललिदाए। मह णत्तिणीएज्जेव एदं वणं। जाए एत्थ देअदा-रूवेण णिओइदा अप्पाणो परिअण-रूआ वुन्दा (३)।

कृष्णः। विहस्य। आर्य्ये वृन्दा खलु तव नप्त्याः परिजनरूपा।

जर। अरे कन्हड एत्थ को संदेहो। साज्जेव पुच्छीअदु (४)।

कुसु। कर्णे लगित्वा। भो वअस्स सा क्खु एदाणंज्जेव पक्ख-वादिणी। सा पमाणत्तणेण ण पुच्छिदव्वा (५)।

सुब। कुसुमासव मा भेतव्यम्। ललिते मद्वयस्य-नाम-मुद्रैवात्र प्रमाणम्। या खलु प्रतिद्रुममेव विराजते।

---

(१) ललिते पाण्डित्यं प्रकाशयसि। भवतु भवतु अस्मद्वयस्य एतस्य वनस्य अधिकः अरिरेव। एतद्वनं तव प्रियसख्याः कथं जातम्।

(२) उपभोग एव प्रमाणम्। अन्यथा कथं निःशङ्कं कुसुमानि आहरामः।

(३) सत्यमेव भणितं ललितया। मम नप्त्र्या एव एतद्वनम्। यया अत्र देवता-रूपेण नियोजिता आत्मनः परिजनरूपा वृन्दा।

(४) अरे कृष्ण अत्र कः सन्देहः। सैव पृच्छ्यताम्।

(५) भो वयस्य सा खलु एतासामेव पक्षपातिनी। सा प्रामाण्यत्वे न प्रष्टव्या।

ललि। जइ एवं तहवि अम्हे ण अपरज्झम्ह। सअलाओ-ज्जेव लदाओ मह पिअ-सही-णाम-क्खरङ्किदा। तेण क्खु लदासु कोऽअहिआरो तुह वअस्सस्स। अम्हेहिं लवङ्ग-लदि-आणंज्जेव कुसुमाइं आहरीअन्ति (१)।

जर। ललिदे णिम्मञ्छणं दे जामि भद्दंज्जेव भणिदं। कण्हड कीस कलहाएसि अत्तणो अहिआरे चिट्ठन्तीहिं एदाहिं सङ्ग। मग्गसि जइ तदो मग्ग मएज्जेव दादव्वाणि लवङ्ग-कुसुमाइं। तुमं कस्स ण पिओ होइ (२)।

राधा। सस्पृहमात्मगतम्। कृष्णमुद्दिश्य संस्कृतेन।

श्यामीकरोति भुवनं वपुषा दिगन्तान्
पूर्णेन्दुमण्डलमयीकुरुते मुखेन।
वाचा सुधारसभृतो विदधाति कर्णान्
दृष्ट्या नभोऽम्बुजमयीकुरुते किमेतत्॥

जर। कण्हड लेहि कुसुमाइं (३)। इति तासामञ्चलतः कुसु-मान्यादाय कृष्णोपकण्ठं विकिरति।

---

(१) यदि एवं तथाऽपि वयं न अपराध्यामः। सकला एव लता मम प्रिय-सखी-नामाक्षराङ्किताः। तेन खलु लतासु कोऽधिकारस्तव वयस्यस्य। अस्माभिर्लवङ्ग-लतिकानामेव कुसुमानि आह्रियन्ते।

(२) ललिते निर्म्मञ्छनन्ते यामि। भद्रमेव भणितम्। कृष्ण किमर्थं कलहायसे आत्मनः अधिकारे तिष्ठन्तीभिरेताभिः सार्द्धम्। याचसे यदि तदा याचस्व मयैव दातव्यानि लवङ्गकुसुमानि। त्वं कस्य न प्रियो भवसि।

(३) कृष्ण गृहाण कुसुमानि।

राधा। अञ्चलेन मुखमावृत्य किञ्चित् स्मित्वा। अज्जिए किं किदं। देअ-पूअण-किदे अवचिदस्स कुसुमस्स ईरिसी अवत्था किदा (१)।

कृष्णः। राधां निर्वर्ण्य स्वगतम्। अहो अतिरम्यत्वं वर्त्तते वसनावृतमुखायाः। यतः

अञ्जनो मृगदृशो दृगञ्चलः
पञ्जरस्थ इव भाति खञ्जनः।
लेश एष हसितस्य दृश्यते
वस्त्रपूत इव चान्द्रमो द्रवः॥

ललि। अज्जिए अदिभआउलाऽसि तुमं। किंत्ति। चिरपरिस्समेण अवचिदं कुसुमं णट्ठीकिदं। को एसो इमस्स वुन्दावणस्स (२)।

जर। ललिदे समत्थाऽसि तुमं कलहं कादुं। अलीअ-गव्व-भर-कण्डूलं दे हिअअं। ता कुणह एतेहिं ठिद्योहिं सह कलहं। एहि णत्तिणि एहि (३)। इति राधामाधाय गन्तुं प्रवृत्ता।

राधा। अज्जे कहिं गन्तव्वं गोवीसरो ण अच्चिदव्वो (४)।

---

(१) आर्ये किं कृतम्। देव-पूजन-कृते अवचितस्य कुसुमस्य ईदृशी अवस्था कृता।

(२) आर्ये अतिभयाऽऽकुलाऽसि त्वम्। किमिति। चिरपरिश्रमेण अवचितं कुसुमं नष्टीकृतम्। क एषोऽस्य वृन्दावनस्य।

(३) ललिते समर्थाऽसि त्वं कलहं कर्त्तुम्। अलीक-गर्व-भर-कण्डूलं ते हृदयं तस्मात् कुरु एतैः धिष्ठ्यैः सह कलहं। एहि नाप्त्रि एहि।

(४) आर्ये कुत्र गन्तव्यं गोपीश्वरो न अर्चितव्यः।

कुसु। अज्जिए एत्थ वअस्सस्स दाणं वट्टदि। कुसुमचोरिअं तुह मुहं दट्ठुण समत्थिदं दाणं दाउण सव्वाओ गच्छन्तु (१)।

जर। अरे वह्मणवडुआ किं रे दाणं (२)।

कुसु। वअस्स सुअल भणीअदु (३)।

सुब। आर्य्ये श्रूयताम्।

योग्यं मत्वा स्मरनरपतिः पश्य दत्त्वा प्रह्वनं
वृन्दारण्ये नवकुलवधूवृन्दघट्टाधिपत्ये।
यत्नादस्थापयदयमिमं मद्वयस्यं यशस्यं
दत्वा शुल्कं व्रजत सुदृशो माऽस्तु शुष्को विवादः॥

जर। होदु दे वअस्सो दानी। अम्हाणं किं तेण। सुमरणरवइणो वसाओ ण अम्हे (४)।

कुसु। होइ वुड्ढिआए तुह कहिं तस्स अहीणदा (५)।

जर। सक्रोधम्। अरे दाण-योग्ग-पअत्थो जइ होइ तदो सङ्का करीअदि (६)।

सुव। प्रियवयस्य स्वयमस्योत्तरं दीयताम्।

---

१ आर्ये अत्र वयस्यस्य दानं वर्त्तते। कुसुम-चौर्यं तव मुखं दृष्ट्वा समर्थितं दानं दत्त्वा सर्व्वा गच्छन्तु।

२ अरे ब्राह्मणवटुक किं रे दानम्।

३ वयस्य सुबल भण्यताम्।

४ भवतु ते वयस्यो दानी। अस्माकं किन्तेन। स्मर-नरपतेर्वश्या न वयम्।

५ भवति वृद्धायास्तव कथं तस्य अधीनता।

६ अरे दान-योग्य-पदार्थो यदि भवति तदा शङ्का क्रियते।

कृष्णः। सगाम्भीर्य्यम्। हन्त भोः श्रूयताम्।

रत्नाद्यं वः कुवलयदृशामस्तु वा नास्तु वस्तु
प्रेङ्खालेऽस्मिन् भुजलतिकयोर्भागधेयो विधेयः।
मर्य्यादेयं मम निगदिता किन्तु रत्नान्यपीमा-
न्यानीयन्ते पुरटपुटिकामन्तरा दर्शयध्वम्॥

सख्यः। पूत्रोवकरण-पुडित्रा इत्रं गोवीसरस्स (१)।

कुसु। अरे मुक्खा अत्रंज्जेव गोवीसरो इमंज्जेव पूएध (२)।

सख्यः। महाआलो गोवीसरो (३)।

कुसु। अत्रं महाआलो किं ण होदि। जस्स रुइ-पडलेहिं सव्वंज्जेव वणं तमाल-वण्णं किदं (४)।

सख्यः। चन्दअसेहरोज्जेव अच्चिदव्वो (५)।

कुसु। पेक्ख पेक्ख एसो चन्दअसेहरो ण होइ (६)।

इति वर्हावतंसं दर्शयति।

सख्यः। वाआल गोरीपतिं पूअइस्सम्ह (७)।

कुसु। तुम्हे गोरीओ ण भवेध (८)।

---

१ पूजोपकरण-पुटिका इयं गोपीश्वरस्य।

२ अरे मूर्खा अयमेव गोपीश्वर इममेव पूजयत।

३ महाकालो गोपीश्वरः।

४ अयं महाकालो न भवति। यस्य रुचिपटलैः सर्व्वमेव वनं तमा-लवर्णं कृतम्।

५ चन्द्रकशेखर एव अर्चयितव्यः।

६ पश्य पश्य एष चन्द्रकशेखरो न भवति।

७ हे वाचाल गौरीपतिं पूजयिष्यामः।

८ यूयं गौर्य्यो न भवथ।

जर। अरे वडुआ एदाणं पई तुह वअस्सोत्ति तुमं जाणेसि। चिट्ठ चिट्ठ गाम-मज्झे तुह दंसणं ण लब्भिस्सं (१)।

सख्यः। अरे वाआल पसुवई पूइदव्वो (२)।

कुसु। हन्त भो एत्तिआओ धेणुओ जो पालेदि सो किं पसुवई ण होइ (३)।

सख्यः। एव्वं भणध जस्स एदे अम्हे पसुओ सो किं पशुवई ण होइ (४)।

सुब। भवतु वयं सर्व्वे एव पशवः। तेन भवन्मते अयमेव पशुपतिस्तदाऽयमर्च्यताम्। किञ्च पुटिकाभिः कृत्वा किं नीयते तद्दर्शयित्वा सुखं गम्यतां किमनेन शुष्ककलहेन।

राधि। भो सहीओ दंसेध (५)। सख्यस्तथा कुर्व्वन्ति।

कुसु। विलोक्य। अअं मिअमओ एदं कुङ्कुमं एदं कालागुरुअं एदं चन्दनं अअं कप्पूरो अअं मोत्ताहारो सिप्प-कोसलेण फणिहारोव्व किदो (६)।

---

१ अरे वटुक एतासां पतिस्तव वयस्य इति त्वं जानासि। तिष्ठ तिष्ठ ग्राम-मध्ये तव दर्शनं न लप्स्ये।

२ अरे वाचाल पशुपतिः पूजितव्यः।

३ हन्त भो एतावतीर्धेनून् यः पालयति स किं पशुपतिर्न भवति।

४ एवं भणत। यस्य एता वयं पशवः। स किं पशुपतिर्न भवति।

५ भोः सख्यो दर्शयत।

६ अयं मृगमद एतत्कुसुममेतत्कालागुरुकमेतच्चन्दनमयं कर्पूरः अयं मुक्ताहारः शिल्पकौशलेन फणिहार इव कृतः।

जर। अरे फणिहारो इमं वडुअं दंसेध (१)।

कुसु। अज्जिए कालिअ-मद्दण-सहअरस्स मे कुदो फणि-हारदो भअं। ता एदाणं करं दाउण गच्छध (२)।

सख्यः। होदु। अम्हे देअ-पूअं कदुअ घरं गच्छम्ह। तदो तुह वअस्सो तत्थ जइ गच्छदि तदा जं सक्कीअदि तंज्जेव दादव्वं (३)।

कुसु। अरे दासीए धीदाओ अप्पणो अहिआर-पदेसं मुञ्चिअ तुम्ह घरं गदुअ मग्गिस्सदि मे वअस्सो। ता चिट्ठध चिट्ठध (४)। इति पूजोपकरणान्यादातुमिच्छति।

ललि। अत्त गोवराअ-णन्देण देव-द्दव्वाणि एदाणि एव्वं अपवित्ताणि कादुं ण जुज्जीअन्ति (५)।

राधा। ललिदे इमिणा प्फंसिदाणि एदाणि कधं देवस्स दादव्वाणि। ता मुञ्च मुञ्च। घरं गदुअ अण्णोवअरणं आणिअ

---

१ अरे फणिहार इमं वटुकं दर्शयत।

२ आर्ये कालीय-मर्द्दन-सहचरस्य मे कुतः फणिहारतो भयम्। तस्मादेतेषां करं दत्त्वा गच्छत।

३ भवतु। वयं देव-पूजां कृत्वा गृहं यामः। ततस्तव वयस्यस्तत्र यदि गच्छति तदा यच्छक्यते तदेव दातव्यम्।

४ अरे दास्या दुहिता आत्मनः अधिकार-प्रदेशं त्यक्त्वा तव गृहं गत्वा याचिष्यति मे वयस्यः। तस्मात्तिष्ठत तिष्ठत।

५ अत्र गोपराज-नन्दनेन देव-द्रव्याणि एतानि एवम् अपवित्राणि कर्त्तुं न युज्यते।

देओ अच्चिदव्वो। ता अज्जिए एहि घरं गच्छम्ह (१)। इति गन्तुमिच्छति।

कृष्णः। पश्चानमाक्रम्य। अयि चतुरम्मन्ये क्व यासि।

राधा। सावहित्थामर्षम्। मूलंज्जेव दिस्सं किं तस्स दाणं मग्गसि (२)।

कृष्णः। सहासामर्षम्। किं मूलं दत्तमस्ति। मूलन्त्वेतदेव श्रूयताम्।

एतत्स्वर्णसरोरुहं तदुपरि श्रीनीलरत्नोत्पले
तत्पश्चात् कुरुविन्दकन्दलपुटे तत्राऽपि मुक्तावली।
सर्व्वं दृश्यत एव किन्तु निभृता या हेमकुम्भद्वयी
किं वान्यन्नयसेऽनयेति तदिदं बाले विचार्य्यं मम॥

राधा। को तुमं विचारस्स। ण हि अविचारेण विचारो कादुं सक्कीअदि (३)।

जर। द्वयोर्मध्यमध्यास्य संस्कृतेन। अरे यशोदा-मातर्मा तरलो भव लोभ-वता हृदयेन कथमाचरसि दुर्विनीतत्वम्। तत्त्वं ते कथयामि। यदि निराकुल-कुलवधूपद्रव-द्रवकथा क्रियते तदा न तेन ते भद्रं भविष्यति।

ललि। सक्रोधमुपसृत्य संस्कृतेन।

---

१ ललिते अनेन स्पृष्टानि एतानि कथं देवस्य दातव्यानि। तस्मात् मुञ्च मुञ्च। गृहं गत्वा अन्योपकरणमानीय देवोऽर्च्चितव्यः। तस्मात् आर्य्ये एहि गृहं गच्छाम।

२ मूलमेव दत्तं किन्तस्य दानं याचसे।

३ कस्त्वं विचारस्य। नहि अविचारेण विचारः कर्त्तुं शक्यते।

कस्त्वं भो ननु माधवः कथमहो वैशाख आकारवान्
मुग्धे विद्धि जनार्द्दनोऽस्मि तदिदं ब्रूते वनावस्थितिः।
मां गोवर्द्धनधारिणं न धरणौ को वेत्ति हुं वर्द्धनं
हिंसा हे वृषहन् बिभर्षि तदघद्वारैव गोवर्द्धनम्॥

प्रेम। अहो कौतूहलम्।

येयं नटैरप्यभिनीयमाना
लीला हरेरेति रसायनत्वम्।
सा यत् स्वकीयैः स्वयमीश्वरेणा-
भिनीयते तत् किमुदाहरामः॥

अपि च। सामाजिकानां हि रसो नटानां
नैवेति पन्थाः कृतिषु प्रसिद्धः।
हन्तोभयत्वे रसवित्त्वमेषा-
मलौकिके वस्तुनि को विरोधः॥

अपि च। अलौकिकाल्लौकिकमेव शौरे-
र्वृत्तं चमत्कारि तदेव लीला।
आकर्षकत्वं हि जगज्जनाना-
मलौकिकत्वस्य स कोऽपि हेतुः॥

इति सविस्मयमालोकयति।

कुसु। अइ कुडिले दुव्विणीदे ललिदे मह वअस्सो दुट्ठा-आरो किदो। ता चिट्ठ चिट्ठ (१)।

---

१ अयि कुटिले दुर्विनीते ललिते मम वयस्यो दुष्टाकारः कृतः। तस्मात् तिष्ठ तिष्ठ।

सुब । सपरिहासामर्षम् । हन्त भोः सत्यमेतत् ।

वक्त्रं वो द्विजराजहिंसि मदिरालोले दृशौ रोचिषा
मूर्त्तिः काञ्चनहारिणी न विरमो गुर्व्वङ्गनासङ्गतः ।
सङ्गी पञ्चम एष पञ्चविशिखः शुद्धिस्तथाऽपीह वो
यन्नामाप्यखिलाघनाशि स परं दुष्टोऽस्मदीयः सखा ॥

तद्वयस्य घट्टपाला हि विना धृष्टता-प्रकटनेन स्वार्थकुशला न भवन्ति । तदात्मनः प्रकटय शौटीर्य्यम् ।

कृष्णः । अन्तर्वर्त्तिनीं भूत्वा राधां पृष्ठतः कृत्वा स्थितवतीं जरतीं करेण निक्षिप्य बलात् राधापटान्तग्रहणमभिनयति ।

जरती । बलान्मोचयित्वा राधामन्तर्धापयन्ती स्वयमप्यन्तर्दधाति ।

नित्या । स्वरूपेण स्थितो नृत्यति ।

मैत्री । देवि किञ्चिदं कुदो अअं अअम्हादो णिच्चाणन्दो । कहिं गदा सा जरदी (१) ।

प्रेम । अयं खलु योगमायाप्रभावः । स्वयमस्मिन्नाविश्य जरती भूत्वा सम्प्रति रसः सावशेष एव सुरसो भवतीति यथासमयमन्तर्हिताऽसौ । ततः स्वरूपेणावतिष्ठतेऽयं नित्यानन्दः ।

यतः । स्वतो बलीयः सहजो हि भावः
स कृत्रिमं भावमधः करोति ।
अग्न्यातपाभ्यां जनितो जलानां
नैवोष्णभावश्चिरकालवर्त्ती ॥

---

१ देवि किञ्चिदं कुतोऽयमकस्मान्नित्यानन्दः । कुत्र गता सा जरती ।

तदिदानीमेतावत्यैव स्थितं नाट्यम्। भवति हि ईश्वरलीलै-वेयं न खलु नटरीतिः। पश्चाद्वैतोऽद्वैत एव।

मैत्री। ण आणे दाणिं भअवं कीदिसो होइ (१)। नेपथ्ये। भो भोः सन्न्यासी सन्न्यासी।

प्रेम। अहो किमियमाकस्मिकी प्रतिकूलवाङ् निरूपयामीति निरूप्य। अये भगवद्द्वारि कश्चित्सन्न्यासी प्रविशति तमालोक्य कश्चिदाक्रोशति तदेहि सहैव निष्क्रमाव। इति निष्क्रान्तौ। निष्क्रान्ताः सर्व्वे ॥ * ॥

दानविनोदो नाम तृतीयोऽङ्कः ॥

---

## चतुर्थाङ्कः।

ततः प्रविशति। आचार्य्यरत्नपत्न्यानुगम्यमाना भगवती

शची। बहिणिए सण्णासिणं पदि कधं सिरिविस्सम्भरस्स एदारिसो आअरो। विजादीअ-वासणो क्खु सण्णासी (२)।

भगिनी। आअरो कधं जाणिदो (३)।

शची। जदो तत्थ दिअहे केसवभारदीणामस्स कस्सवि सण्णासिणो भिक्खत्थं सद्धालुओ ऊविअ मं उत्तवं। सअस्स तस्मिं

---

१ न जाने इदानीं भगवान् कोदृशो भवति।

२ हे भगिनि सन्न्यासिनं प्रति कथं श्रीविश्वम्भरदेवस्य एतादृश आदरः। विजातीयवासनः खलु सन्न्यासी।

३ आदरः कथं ज्ञातः।

गुरुई-भत्ती अणुराओवि पअडिदो (१)।

भगिनी। सोवि भत्तो ङविस्सदिव्व (२)।

शची। कम्पेदि मे हिअअं सण्णासी-णाम-मेत्तेण। अस्स अग्गएणाहं पढाइदा। इमं सन्दब्भं तस्स ठाणे पुच्छिस्सं (३)।

भगिनी। जुत्तं सेदं (४)।

शची। ता जाणेहि। कुदो सो मह हिअआणन्दण चन्दणद्दुमो (५)।

भगिनी। पुरोऽवलोक्य। देवि पेक्ख पेक्ख। अअं दे पुण्णिमाचन्दो विअ पूव्वदिशाए उग्गच्छदि णन्दणो (६)।

शची। सस्पृहमालोकयति। ततः प्रविशति भगवान्

विश्वम्भरः। अञ्जलिं बद्धा। अम्ब प्रणमामि।

शची। चिरं जीव। इति मूर्द्धानमाघ्राय। ताद इअं आचारिअ-रअण-कलत्तं इमं प्रणम (७)।

---

१ यदा तत्र दिवसे केशवभारतीनाम्नः कस्यापि सन्न्यासिनो भिक्षार्थं श्रद्धालुर्भूत्वा मामुक्तवान्। स्वयञ्च तस्मिन् गुरुतर-भक्तिरनुरागोऽपि प्रकटितः।

२ सोऽपि भक्तो भविष्यत्येव।

३ कम्पते मे हृदयं सन्न्यासि-नाम-मात्रेण। अस्य अग्रजेनाहं पाठिता। इमं सन्दर्भं तस्य स्थाने प्रक्ष्ये।

४ युक्तमिदम्।

५ तज्जानीहि। कुतः स मम हृदयानन्दनचन्दनद्रुमः।

६ देवि पश्य पश्य। अयं ते पूर्णिमा-चन्द्र इव पूर्वदिशाया उद्गच्छति नन्दनः।

७ तात इयं आचार्य-रत्न-कलत्रम्। एनां प्रणम।

देवः। तथा करोति। सा ससाध्वसं सङ्कुचति।

शची। ताद एक्कं पुच्छिस्सं (१)।

देवः। आज्ञापय।

शची। पुत्तअ सण्णासिणं पदि कधं दे एदारिसो आअरो। जं तत्थ दिअहे केसवभारदीं पदि तादिसी भत्ती किदा तुमए (२)।

देवः। अम्ब ते खलु परमभागवता भवन्ति।

शची। तत्तं कधेहि। सण्णासो वा कादव्वो तुमए (३)।

देवः। विहस्य। अम्ब कुतोऽयं ते भ्रमः। इदमपि भवति किम्।

शची। वच्छ एदेणज्जेव दे अग्गएण दिण्णं पुत्थअं मए पाअ-समए चुल्लीमज्झे दाऊण जालिदं (४)।

देवः। किं पुस्तकं कथं वा प्रदीपितम्।

शची। विस्सरूएण मे कधिदं "अम्ब विश्वम्भरो यदा विज्ञो भवति तदा तस्मै एतत् पुस्तकं देयमिति"। मए दाव दावज्जेव तं रक्खिदं जाव सो पव्वइदो ण भूदो। पव्वइदे तत्थ अअं-

---

१ तात एकं प्रक्ष्ये।

२ पुत्र सन्न्यासिनं प्रति कथं ते एतादृश आदरः। यत्तस्मिन्दिवसे केशवभारतीं प्रति तादृशी भक्तिः कृता त्वया।

३ तत्त्वं कथय। सन्न्यासो वा कर्त्तव्यस्त्वया।

४ वत्स एतेनैव ते अग्रजेन दत्तं पुस्तकं मया पाक-समये चुल्लीमध्ये दत्त्वा ज्वालितम्।

पि एदं पुत्थअं लम्भिअ पव्वइदो हुविस्सदित्ति तुह सङ्काए जालिदं (१)।

देवः। चरणमनुतप्य विहस्य च। अम्ब यद्यपि सम्बिद्रूपैव भवतो तथापि पुत्रवात्सल्येनेदमज्ञानविलसितमनुशीलितम्।

शची। ताद एसो अवराहो मम ण गहिदव्वो (२)।

देवः। कोऽपराधो जनन्याः पुत्रेषु। किन्तु ममापराधो यदि भवति तदा क्षन्तव्य एवासौ मातृचरणैरिति प्रसादः क्रियताम्।

शची। वत्स ण कहिंपि दे अवराहो गहिदव्वो सो तुह णत्थिज्जेव (३)।

देवः। अम्ब दिनानि कतिपयानि कुत्रापि मम गन्तव्यमस्ति त्वया मनसि खेदो न कार्य्यः।

शची। कहं गन्तव्वं (४)।

देवः। अम्ब येन भवत्याः सर्व्वेषाञ्च बन्धूनां सदा सुखायव भूयते तदनुसन्धानं कर्त्तुम्।

शची। तं क्खु तुमंज्जेव (५)।

---

१ विश्रम्भेण मे कथितम्। मया तावत्तावदेव तत् रक्षितं यावत्स प्रव्रजितो न भूतः। प्रव्रजिते तत्र अयमपि एतत्पुस्तकं लब्ध्वा प्रव्रजितो भविष्यति इति तव शङ्कया ज्वालितम्।

२ तात एषोऽपराधो मम न ग्रहितव्यः।

३ वत्स न कदापि ते अपराधः। ग्रहितव्यः स तव नास्त्येव।

४ कथं गन्तव्यम्।

५ तत् खलु त्वमेव।

देवः। यद्यप्येवमेव तथाऽपि येन ममापि शोभाऽतिशयो भवति तदर्थं यतिष्यते।

शची। वत्स जधा मह दुःखं ण होइ तधा करणिज्जं (१)।

देवः। अम्ब

श्रीकृष्णः परिपालकस्तव पिता माता च पुत्रोऽपि च
ज्ञातिश्च द्रविणञ्च नित्यसुखदो बन्धुश्च देवोऽपि च।
सङ्गः शाश्वत एव यस्य तमनुस्मृत्यानिशं चेतसा
सम्पन्नाऽसि तवाधुना सुखमयं जानीहि दिङ्मण्डलम्॥

शची। वत्स तुमंज्जेव सव्वं। तुह पसादादो मह दुःखं णत्थि। किन्तु जधा सन्ततं तुमं पेक्खामि तहज्जेव कादव्वं (२)।

देवः। कृष्ण एव सततं त्वया द्रष्टव्यः। स एव तव सर्व्व-दुःखध्वंसी भविष्यति।

शची। तहत्थु। ता तुमंज्जेव मम कण्हो। ता उत्थेहि मज्झण्हो जादो। तुमंपि सिणाण-पूअणादिकं कुणह। अहम्मि पाअत्थं जामि। वहिणिए तुमम्पि घरं गच्छ। तवावि भअवदो पाअ-सेआ-समओ जादो (३)। इति सर्व्वे निष्क्रामन्ति।

ततः प्रविशति अद्वैतः।

---

१ वत्स यथा मम दुःखं न भवति तथा कर्त्तव्यम्।

२ वत्स त्वमेव सर्व्वम्। तव प्रसादतो मम दुःखं नास्ति। किन्तु यथा सन्ततं त्वां प्रेक्ष्यामि तथैव कर्त्तव्यम्।

३ तथास्तु। तत्त्वमेव मम कृष्णः। तस्मादुत्तिष्ठ मध्याह्नो जातः। त्वमपि स्नानपूजनादिकं कुरु। अहमपि पाकार्थं यामि। भगिनि त्वमपि गृहं गच्छ। तवापि भगवतः पाक-सेवा-समयो जातः।

अद्वैतः । भूतावेश-विवश-निखिलेन्द्रियवृत्तिर्भगवदावेश-विसंष्ठुलश्च समानमेव भावमादधाति । यतः खलु यावत्तस्मिन् दिवसे भगवदावेशेन यन्मया नर्त्तितं तज्जनमुखादेव साम्प्रतं श्रुत्वा प्रतीयते सन्दिह्यते च । तेनाव्याहतप्रभावोऽयं भगवान् विश्वम्भरः । वस्तुतस्तु कोटि-कोटि-जगदण्डघट-घटन-विघटन-नाटक-परिपाटी-पाटवस्य निजचरित-ललित-कीर्त्ति-सुधा-धावित-जगज्जन-हृदयावट-घटमान-तमःकाटवस्य भगवतस्तथैव लीलायितं खलु प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यैतिह्यादिप्रमाणनिवहैरपि न प्रमातुं शक्यते विना तस्यैवानुग्रह-जन्यज्ञानविशेषम् । तेन तदानीन्तनमलौकिक-चमत्कार-कारणमस्मन्निष्ठमपि नटन-लीलायितं नास्माकमनुभवगोचरस्तद्व्यवसितम् ।

ते न यास्यन्ति केऽपि मोहं विवदिष्यन्ते च तैः समं केचित् ।
केचन संदर्भविदो रहस्यमिदमित्यवैष्यन्ति ॥

इत्यूर्द्ध्वमवलोक्य । अहो चरमाचल-शिखर-चुम्बी लम्बमानोऽयं भगवान् मरीचिमाली । तथा हि

नाम्नैव मे त्वमसि किन्त्वखिलग्रहाणां
विश्रामपात्रमिति तत्पतिनाऽभिशस्ता ।
तत्प्रत्ययाय परितप्तमयो दधाति
सन्ध्यार्कविम्बकपटादिव वारुणी दिक् ॥

अथ वा । सायाङ्गसङ्गसुखलुप्तधियः प्रतीच्याः
शोणाभ्रवाससि समुच्छ्वसिते नितम्बात् ।

काञ्चीकलापकुरुविन्दमणीन्द्ररूपी
कालक्रमाद्दिनपतिः पतयालुरासीत् ॥

तदिदानीं विगतवर्त्मपरिश्रमः सन्ध्यामुपास्य दर्शनीयतमो द्रष्टव्यः। स खलु भगवान् विश्वम्भरः। इति तथा कर्त्तुमिच्छति। नेपथ्ये। हन्त भो निजपुरं गत्वा समागतप्रायोऽहमिति ज्ञात्वा गतोऽद्वैतः कथमद्यापि नाऽऽयातः।

अद्वै। श्रुतिमभिनीय। अहो मद्विलम्बमालोक्य स्वयमेव देवो मामाक्षिपति तदहं सत्वरमेव गच्छामि। इति परिक्रामति।

प्रविश्यापटीक्षेपेण।

श्रीवासः। भो अद्वैतदेव आज्ञापयति भगवान्।

अहमितः श्रीवासगृहं गच्छन्नस्मि भवताऽपि तत्रैव गन्तव्यमिति।

अद्वै। यथाऽऽज्ञापयति देवः। इति तेन सह परिक्रामन् पुरोऽवलोक्य। इदमिदं श्रीवासपुरं यावत् प्रविशामि। इति प्रवेशं नाटयित्वा प्राचीं दिशमवलोक्य। अहो रम्यम्।

आह्लादयन्नक्षि जगज्जनानां
प्रेमामृतस्यन्दसुषीमपादः।
उल्लासयन् कौमुदमुज्जिहीते
चन्द्रश्च विश्वम्भरचन्द्रमाश्च ॥

ततः प्रविशति। श्रीवासादिभिः समुपगम्यमानो भगवान्

विश्वम्भरः। प्रत्युत्थाय। स्वागतं भोः स्वागतम्।

अद्वै। श्रीमुखचन्द्रदर्शनेन।

देवः। सादरमभिवन्द्याऽऽलिङ्ग्य च। भगवन्नत्रोपविश्यताम्।

अद्वै। यथाऽऽज्ञापयसि। इति सर्व्वे सुखोपवेशं नाटयन्ति।

भगवान्। अद्वैतं प्रति। सर्व्वे वयं भुक्तवन्तः पीतवन्तश्च केवलमध्वपरिश्रान्ताः त्वत्परिश्रान्ताश्च भवन्तस्तदलं विलम्बेन।

श्रीवा। आतिथेयोऽसि। आतिथ्येन समुपचर्य्यन्तामेते भवता।

अद्वै। अलमनया चिन्तया वयमपि भवन्त इव समाप्तसर्व्वाह्निका एव।

भगवान्। सप्रमोदम्। तदिदानीं हिमकर-कर-कलधौत-जल-धौते श्रीवास-वासाङ्गण-परिसरे भगवत्सङ्कीर्त्तनमङ्गलमङ्गीकुर्व्वन्तु भवन्तः।

सर्व्वे। सप्रमोदम्। भगवन्नुत्थीयतां स्वयमपि।

भगवान्। एषोऽहं गच्छामि। इति सङ्कीर्त्तनस्थलीं प्रति सर्व्वे निष्क्रान्ताः।

ततः प्रविशति गङ्गादासः।

गङ्गा। अहो अद्वैतदेव शान्तिपुरतः समागतोऽस्तीति श्रुतमस्ति न जाने किं भगवद्विश्वम्भरालये समुत्तीर्णः श्रीवासालये वा तदस्य तत्त्वमवधारयामि। इति कर्णिचित्पदान्यादधाति।

नेपथ्ये। सङ्कीर्त्तनकोलाहलः।

गङ्गा। आकर्ण्य। अहो श्रीवासाऽऽलयं समया समयाऽऽसादित-सकल-भक्तजन-प्रमोदी प्रमोदीर्ण-सङ्कीर्त्तनकोलाहलोऽयं मया श्रूयते। तदित एवाद्वैतेनापि भवितव्यं तदिह

स्थित्वैव निभालयामि। इति निभाल्य। अहो सर्व्व एव कीर्त्त-यन्तो भगवन्तं विश्वम्भरं नर्त्तयन्ति नृत्यन्ति च। तदेवं मन्ये।

दुर्वारदैत्यघटया घटिते पटीयो-
भारे स्वयम्भगवताऽपहृतेऽपि भूमेः।
तस्यावसादमधुना विधुनोति देवो
भक्तैर्नटन्नटननिष्ठुरपादघातैः॥

पुनर्निभाल्य। अहो।

आनन्दः किमु मूर्त्त एष परमः प्रेमैव किं देहवान्
श्रद्धा मूर्त्तिमती दयैव किमु वा भूमौ स्वरूपिण्यसौ।
माधुर्य्यं नु शरीरि किं नवविधा भक्तिर्गतैक्यां तनुं
तुल्याऽऽवेशसुखोत्सवो भगवता वक्रेश्वरो नृत्यति॥

पुनर्नेपथ्ये। सम्भूयानन्दतुमुलो जयध्वनिकलकलः।

गङ्गा। निभाल्य। अहो महत्कौतुकम्।

वक्रेश्वरे नृत्यति गौरचन्द्रो
गायत्यमन्दं करतालिकाभिः।
वक्रेश्वरो गायति गौरचन्द्रे
नृत्यत्यसौ तुल्यसुखानुभूतिः॥

पुनर्नेपथ्ये। तथैव जयध्वनिः कोलाहल उलूलनिनदश्च।

गङ्गा। चिरं निरूप्य। अहो भगवान् विश्वम्भर एव नृत्ये प्र-वृत्तः। तथा हि

गभीरैर्हुङ्कारैर्निजजनगणान् वर्हिणयति
द्रुतैर्वाष्पाम्भोभिर्भुवनमनिशं दुर्द्दिनयति।

मद्दः पूरैर्विद्युद्वलययति दिक्षु प्रमदय-
न्नसौ विश्वं विश्वम्भरजलधरो नृत्यति पुरः ॥

अपि च। दिशि विदिशि दृशा सरोजमाला
नयनजलेन मधूनि तत्र तन्वन्।
मधुकरनिकरं भ्रुवा च चक्र-
भ्रमिनटने जयतीह गौरचन्द्रः ॥

अपि च। पादाघातैरुरगनगरानन्दनिस्यन्दहेतो-
र्बाहुत्क्षेपैरिव सुरपुरीताण्डवे पण्डितस्य।
आशाचक्रं भ्रमयत इव भ्राम्यदुद्योतदण्डै-
र्जीयाच्चक्रभ्रमणनटनं देवविश्वम्भरस्य ॥

पुनर्निभाल्य। अहो। अनन्तरं भगवानद्वैतोऽपि नर्त्तितुं प्रविष्टः।

श्रीवासस्त्रिभिरेव सुस्वरतमैरामादिभिः सोदरै-
र्गायत्येष कलं स्वयञ्च भगवान् वक्रेश्वरश्चोत्सुकः।
मञ्जीराङ्गदहारकङ्कणधरः काञ्चीकलापादिमा-
नद्वैतस्तनुमानिवैष भजनानन्दो नरीनृत्यते ॥
स्थूलोष्णीषविलाससुन्दरशिराः कर्णद्वये ताण्डवा-
न्दोलन्मौक्तिककुण्डलो हृदि चलच्चामीकरस्रग्वरः।
पादाग्रे चलनूपुरः पुलकितो वाष्पाम्बुधौताऽऽननो
नित्यानन्दमहाशयोऽपि महताऽऽवेशेन नृत्यत्ययम् ॥

अम्बरमवलोक्य। अहो याम-मात्रावशिष्टेयं त्रियामा। उचित-मेव घूर्णते नयनयुगलम्। भगवत्या निद्रयाऽभिभूतोऽस्मि। तद-

चैव क्षणं निद्रामि। इति निद्रां नाटयन् स्वप्नायते। भो विश्वम्भर-देव कुत्रासि कुत्रासि। इति स्वप्नायित्वा पुनः प्रबुध्य। अहो किम-यमालोकितो दुःस्वप्नः। इति मुहूर्त्तं हृदि भगवच्चरणौ विचिन्त्य पुनर्नेपथ्याभिमुखमवलोक्य। अहो न कोऽपि दृश्यते सर्व्व एव भगवत्प्रमुखाः सङ्कीर्त्तनोपरमे यथायथं शयनाय गतवन्त इव लक्ष्यन्ते भवतु तदहमपि स्वनिलयं गच्छामि। इति कतिचित्प-दानि परिक्रम्य। अहो विभातैव विभावरी। इति प्राचीमवलोक्य।

उल्लङ्घ्य किञ्चिदुदयाचलवप्रधारां
प्राच्या दिशोऽम्बरतटीमवलम्बमानः।
पादप्रसारणविधावपटुस्तथाऽपि
बालो रविः कलय कालवशादुदेति॥

इति कतिचित्पदानि गत्वा पुरोऽवलोक्य। अहो कोऽयं सत्वरः किञ्चित्पिपृच्छुरिव समुपैति। प्रविश्य। सम्भ्रान्तः कश्चित्।

पुरुषः। अहो गङ्गादास भवद्दृष्टो देवो विश्वम्भरः।

गङ्गा। सोल्लासम्। अहो मे भागधेयम्। यमवलोकयितुं गच्छन्नस्मि। स एव स्वयमागतोऽस्मद्दृष्ट्याम्।

पुरुषः। अये एवं पृच्छामि। भवद्दृष्ट्यामागतः किमिति।

गङ्गा। सवैमनस्यम्। कथमेवं पृच्छसि।

पुरुषः। अन्यस्मिन्नहनि प्रातः स्वनिलये गत्वा कृत्यं करोति अद्य न गत इति शचीदेव्या प्रेषितोऽस्मि तदन्वेषणाय।

इत्युक्त्वैव पुनरन्यतोऽन्वेष्टुं निष्क्रान्तः।

पुनरन्यः सम्भ्रान्तः सत्वरं प्रविश्य पुनस्तथैव पृष्ट्वा निष्क्रान्तः।

पुनरन्यः पुनरन्यः पुनरन्यश्चेति तथा तथैव दृष्ट्वा दृष्ट्वा निष्क्रामति।

गङ्गा। सवैमनस्यम्। अहो फलितमिव दुःस्वप्नेन। तत्किं करोमि। अद्वैतादयो यत्र तिष्ठन्ति तत्रैव यामि। इति कविचित्पदान्यादधाति।

ततः प्रविशन्ति दौर्मनस्येन वितर्कं नाटयन्तोऽद्वैतादयः।

अद्वै। श्रीवास किमेतत्।

मतेऽस्माकं प्रातः स्वभवनमुपेतोऽस्ति भगवान्
गृहे श्रीवासादेः स्थित इति जनन्या मतमिदम्।
इति भ्रान्ताः सर्व्वेऽप्रकृतमनसः सम्प्रति वयं
कथं विघ्नोऽकस्मादयमशनिपातोऽद्य भविता॥

श्रीवा। ये ये प्रहितास्तदन्वेषणाय तेषां न कोऽपि प्रत्यावर्त्तते।

अद्वै। अन्विष्य यदि पश्यति तदैव प्रत्यावर्त्तिष्यते। कोऽपि किमप्यनुसन्धानं न लब्धवान्। एतत् किं सम्भाव्यते।

इह ग्रामे को वा स्थगयतु तमात्मप्रकटनं
स किं वा स्वात्मानं स्थगयितुमपीशः प्रभवतु।
अपह्नोतुं शक्यो न भवति जनैश्चण्डकिरणः
कथङ्कारं व्योम्नि स्वमपि स दिने व्यन्तरयतु॥

श्रीवा। पुरोऽवलोक्य। अयं गङ्गादासः समायाति तदयं प्रष्टव्यः।

उपसृत्य।

गङ्गा। भो भो महाभागाः कथमाकस्मिकोऽयं विप्लवः।

सर्व्वे। अहो अयमपि तदनुसन्धानधुरन्धरः। यदयमस्मानेव पृच्छति।

अद्वै। साखम्।

हे विश्वम्भरदेव हे गुणनिधे हे प्रेमवारां निधे
हे दीनोद्धरणावतार भगवन् हे भक्तचिन्तामणे।
अन्धीकृत्य दृशो दिशोऽन्धतमसीकृत्याखिलप्राणिनां
शून्यीकृत्य मनांसि मुञ्चति भवान् केनापराधेन नः॥

मरारिः। भो भो देव अद्वैत त्वमतिदुर-वगाहगभीरोऽसि। कथमनिर्णयेनैवं विलपसि। त्वादृशामीदृशानुतापेनैव नितरां प्रतप्ता भविष्यति तपस्विनी शची देवी।

श्रीवा। सत्यमाह मुरारिः। यतः।

तन्मात्रपुत्रा वत सा तदेक-
चक्षुस्तदेकस्वसुखानुभूतिः।
माताऽपि तस्मिन् गुरुदेवबुद्धि-
र्न तं विना जीवति सा क्षणञ्च॥

तदधुना तज्जीवनरक्षैव नः कर्त्तुमुचिता। तस्माद्भो गङ्गादास भवद्वचसि तस्याः प्रत्ययोऽस्ति त्वया तथा कथनीयं यथाऽसौ जीवनेन न वियुज्यते।

गङ्गा। यथाऽऽज्ञापयन्ति भवन्तः। इति निष्क्रान्तः।

गदाधरः। सकरुणम्। भो नाथ।

गतो यामो यामावहह गतवन्तौ वत गता
अमी यामा हा धिक् दिनमपि गतप्रायमभवत्।

क्रमादाशापाशस्त्रुटति बत हा सार्द्धमसुभि-
स्तथाऽपि त्वद्वार्त्ता न हि गतवती श्रोत्रपदवीम् ॥

इति मुह्यति।

वक्रेश्वरः।

त्यक्ता नः किमु यास्यतीति करुणासिन्धो गतायां निशि
प्रेमाधिक्यपरिप्रकाशसरसां नानानुकम्पां व्यधाः।
कारुण्यं तव तच्च कीदृशमहो भूयस्तुपेक्षा च वा
कीदृक् ते बत दृश्यते द्वयमिदं हे नाथ लोकोत्तरम् ॥

इति मुह्यति।

मुरारिः। सक्षोभम्।

आहार्य्यं धैर्य्यं क्रियते बहिर्यत्
क्षिणोति तद्बाष्पभरोऽन्तरस्थः।
पुनः पुनर्बद्धमपि प्रवृद्धः
सेतुं यथा सैकतमम्बुपूरः ॥

इति फूत्कृत्य फूत्कृत्य रुदन् भूमौ निपतति।

श्रीवा। तमालोक्य। अतिगभीरोऽयं दुर्निवारानुराग-तारल्यः संप्रवृत्तः। भवत्येव।

पयः प्रपूरः स्थिर एव तावत्
करोति यावन्न हि सेतुभङ्गम्।
भग्ने तु सेतावतिदुर्निवारः
समस्तमाप्लावयितुं समर्थः ॥

भो नाथ विश्वम्भर क्वासि क्वासि।

पूर्व्वं मृतः कथमहो वत जीवितोऽहं
भूयोऽपि मारयसि किं वत जीवयित्वा।
दुर्ल्लीलता तव विभो न मनोऽधिगम्या
नन्वीश्वरो भवति केवलबाललीलः ॥

इति रोदिति।

मुकुन्दः।

नालोक्यते तव मुखं नयनेन किं नो
नाऽऽकर्ण्यते तव वचः श्रवणेन वा किम्।
हे प्राणनाथ भगवंस्त्वदुपेक्षितानां
कष्टेन वा किममुना हतजीवितेन ॥

जगदानन्दः। सवाष्पम्।

नास्माहृशैस्तव पदाम्बुजसङ्गहीनै-
र्जीविष्यते क्षणमपीति मनो न आसीत्।
लज्जामहे दयित हे तत एव देव
जीवाम एव दिवसांस्त्वदनीक्षणेऽपि ॥

इति मूर्च्छति।

दामोदरः। हा प्राणनाथ क्वासि क्वासि।

प्राणा न किं व्रजत मुञ्चत जाड्यमुच्चैः
प्राणेश्वरस्त्वरति साम्प्रतमेक एव।
तत्पादपङ्कजमुपेत्य भजध्वमज्ञाः
प्रेमात्मनामहह माऽस्तु कुले कलङ्कः ॥

इति मूर्च्छति।

हरिदासः। अहो कष्टम्।

प्राणेश्वरेण सह चेत्सहसा न जग्मुः
प्राणाः पुनर्झटिति नैव भवन्ति गन्तुम्।
धिक्कारकोटिकटुतामनिशं सहन्ते
सीदन्ति नैव वहतस्त्ववसादयन्ति॥

भवतु क्षणमवगच्छामि।

यदि नयनयोः पन्थानं मे न याति स ईश्वरो
यदि करुणया नो दृक्पातं स मद्विधे।
कुलिशकठिनानां वोऽहनां सहस्रमपि क्षणा-
क्षणमिव परित्यक्ष्याम्यङ्गस्तदङ्घ्रिपरीप्सया॥

इति धैर्य्यमवष्टभ्य चिन्तां नाटयति।

विद्यानिधिः।

प्रेमन्नमोऽस्तु भवते यदकैतवेन
नोत्पद्यसे क्वचन हा वत किं ब्रवीमि।
तस्मिन्नकैतवरूपेऽपि सकैतवस्त्वं
नो चेत् कथं नु मम जीवनयोग एषः॥

इति भूमौ पतित्वा विक्लवः सन् रोदिति।

मुरारिः। धैर्य्यमवष्टभ्य। हंहो महानुभावा विचारयत किमे-
काकिनैव प्रभुना क्वापि गतं किम्बा कश्चिदन्योऽपि गत इति।

अद्वै। अयं विचारः कथमुत्पद्यताम्।

न गच्छन् पथि केनापि स दृष्टो गौरचन्द्रमाः।
विद्युत्पुञ्ज इवाकस्माद्दृशोरविषयं गतः॥

मुरा। अस्त्युपायो विचारस्य।

सर्व्वे। कथमिव।

मुरा। आत्मवर्गमध्ये विचार्य्यताम्। कोऽत्र न वर्त्तते।

सर्व्वे। सम्यगुक्तमेतेन। इति मिथो विचारयन्ति।

मरा। अहोमयाकलितम्।

सर्व्वे। तत् किम्।

मुरा। नित्यानन्दमहानुभाव आचार्य्यरत्नश्च।

सर्व्वे। कुत इदमुपयुज्यते।

मुरा। एतावति कष्टे यद्यत्र तावभविष्यतां तदाऽत्रैवागमिष्यताम्।

सर्व्वे। किञ्चिदाश्वस्य। अहो अस्माकं यथा तथा भवतु स चेदेकाकी न भवति तेनैव किञ्चिदाश्वस्तमस्माभिः।

अद्वै। अये मुकुन्द त्वमनया वार्त्तया मातरमाश्वासय "मातस्त्वां प्रति चिन्ता न कार्य्या नित्यानन्दाचार्य्यरत्नाभ्यां कार्य्यविशेषार्थं क्वापि देवेन गतमस्ति समागतप्रायोऽयम्" इति वक्तव्यम्।

मुकु। यथाऽऽज्ञापयति। इति निष्क्रान्तः।

अद्वै। हंहो विश्वम्भरदेवप्रियाः किञ्चिद्धैर्य्यमिव जातं चेतसः। यतस्तावुभावेवाभियुक्तौ तयोः सतोः स्वतन्त्रोऽपि भगवान्नस्वातन्त्र्यं न करिष्यति। हन्त किमुद्देश्यं तस्य यदर्थमिदमध्यवसितम्।

तीर्थाटनञ्चेत् किमपङ्कवेन
गन्तुं समर्थाः सह तेन सर्व्वे।

तयोर्विशेषप्रणये हितञ्चे-
दत्रापि तत्सम्भवितुञ्च योग्यम्॥

इति सर्व्वे त्वरां चिन्तयन्तस्तूष्णीं तिष्ठन्ति।

नेपथ्ये। हन्त भोः कष्टम्।

हा धिक् कष्टमहो दिनत्रयमभूद्वार्त्ताऽपि तैर्नश्रुता
ते जीवन्ति मृता न किं किमथवा दत्ताश्रया मूर्च्छया।
सन्त्यज्य प्रियमीश्वरं वत विधे दृष्ट्वा च तं तादृशं
प्रत्यावृत्तिपरः कथं नु पुरतस्तेषां भविष्याम्यहम्॥

तदिहैव स्थित्वा शरीरत्याग एव यतनीयम्।

सर्व्वे। श्रुतिमभिनीय। अहो आचार्य्यरत्नस्येव स्वरः श्रूयते। वाष्पगद्गदतया सम्यङ्नालक्षि तन्निपुणमवधारयाम। इति सर्व्वे अवधानं नाटयन्ति।

पुनर्नेपथ्ये। हन्त हन्त किमिति पामरेण मया तत्सङ्गे न गतम् अथवा।

शिव शिव हठः कर्त्तुं शक्यो न हि प्रभुणा समं
निजमभिमतं स्वेषां चित्ते प्रवर्त्तयति प्रभुः।
प्रकटयति हि स्वीयं सूर्य्यः स्वकान्तमणौ महो
न विघटयितुं शक्नोत्येष स्वदाहकरञ्च तत्॥

सर्व्वे। आकर्ण्य। सत्यमेवायमाचार्य्यरत्नस्तन्मन्यामहे भगवन्तं विमुच्य समागतोऽयम्। यतः "शिव शिव हठः कर्त्तुं शक्यो न हि प्रभुणा समम्" इति निगदति। हन्त भो भर्ज्जितमिव दुर्द्दव-दव-दहन-ज्वालया कथमप्यासादितमाश्वासवीजम्।

मुरा। एवं मन्ये नित्यानन्ददेवः सङ्गे वर्त्तते। अयं कार्य्यान्तरायात्र प्रेषित इव।

अद्वै। किं तावदस्यात्र कार्य्यम्। न तावद्वित्ते प्रयोजनं यदर्थमयमागमिष्यति। न मातरि च तथा ममत्वम्। यत्तामेव शान्त्वयितुं प्रहेष्यति। न तादृगस्मादृशां सौभाग्यम्। यदस्मांल्लालयितुं प्रस्थापयिष्यति। तदलमनया विचिकित्सया। तन्न वेद्मि किमपरं फलं धृतमस्ति मादृशां दुर्दवविषभूरुहेण। इति सचिन्तस्तिष्ठति।

पुनर्नेपथ्ये। हा कष्टं पामर एवास्मि। यतः

पश्चात् पश्चात् कथमनुसृतं नैव हा हन्त दृष्ट्वा
तादृग्रूपं कथमिव दृशौ हन्त तापैर्न दग्धे।
याहीत्युक्ते सति भगवता जीवितं किं न यातं
हा हा विश्वम्भर तव तया मायया वञ्चितोऽस्मि॥

सर्व्वे। आकर्ण्य। नेपथ्याभिमुखं निरीक्षामहे माऽतःपरं विलम्ब्यताम्। इति तदीक्षमाणास्तिष्ठन्ति।

ततः प्रविशत्याचार्य्यरत्नः।

आचा।

क च स्निग्धश्यामः कुटिलकचपाशः क स विधिः
क च श्रोणीभारः क शिव शिव कौपीनमपि तत्।

क्षणं स्थित्वा परामृश्य।

प्रतीतिर्द्रष्टॄणां परमियमहो वस्तु न हि तत्
समस्तस्याधारात्मनि चिति समस्तं स्फुरति हि॥

सर्व्वे। उपसृत्य सोत्कण्ठम्। आचार्य्य कथय कथय क्वासौ भगवान्।

आचा। हन्त भोः किमेष पामरः कथयतु।

अद्वै। कथय किं वृत्तम्।

आचा। कर्स्से। एवमेव।

अद्वै। हन्त कथमयं करेण पिधापनीयोऽर्थः। तत् स्फुटं कथय सर्व्वे शृण्वन्तु। इति सवाष्पमुच्चैः।

तास्ताः कीर्त्तननृत्यकौतुककला हा धिक् समाप्तिं गता-
स्तास्ताः प्रेमविलासहासमधुरा वाचः स्थिता नो हृदि।
सा प्रीतिः करुणा च सा शिव शिव स्मृत्येकशेषाऽभवत्
सन्न्यासेन तव प्रभो विरचितः सर्व्वस्वनाशो हि नः॥

सर्व्वे। आकर्ण्य मोहं नाटयन्ति। प्रविश्य सत्वरम्

गङ्गादासः। आचार्य्य कथय कल्याणिनो देवस्य कल्याण-मित्येषा पृच्छति भगवन्माता। आचार्य्यो बाष्परुद्धकण्ठस्तिष्ठति।

अद्वै। मन्नाम्ना तां ब्रूहि।

रामस्य विपिनवासः कृष्णस्य च माथुरं गमनम्।
अस्य च सन्न्यासविधिस्त्रितयं मातृत्रयस्य सोढव्यम्॥

गङ्गा। हंहो तयाऽप्येतदनुमितमस्ति पुरैव उक्तञ्च। किं गोप्यते भवद्भिः स खलु ज्येष्ठस्य वर्त्म शिश्राय। लोकोत्तरच-रितानां तुल्ये काठिन्यकारुण्ये।

अद्वै। भवत्येवमेवासौ धैर्य्यवती कथमन्यथा तादृशः पुत्रः। क्षणं स्थित्वा विमृश्य। भवत्येवम्।

सन्न्यासकृच्छमः शान्तो निष्ठाशान्तिपरायणः ।
इति नामानि देवोऽयं यथार्थान्यधुनाऽकरोत् ॥

अपि च। अस्मिन्नेव हि भगवति यथार्थमभवन्महावाक्यम् ।
मुख्यार्थतया हि तया जहदजहत्स्वार्थलक्षणा नात्र ॥

आचार्य्य आमूलतः कथय ।

आचा। हन्त एतदर्थमेव जीवितं मया। तदितो निशाऽवसाने नृत्योपरमसमय एव मत्करमालम्ब्य कति चित्पदानि गच्छन्नग्रे नित्यानन्ददेवमालोक्य "त्वमप्येहि" इति सङ्गे कृत्वा सुरधुनीमुत्तीर्य्य चलितवान्। मयोक्तम्। देव कथय कथमेकाकिना कुत्र गम्यत इति तदनाकलयन् तूष्णीमेव चलन्ननपदमावाभ्यामनुगम्यमान एव काटोञ्जानामानं ग्राममासाद्य केशवभारतीयतीन्द्रमुपसेदिवान्। तदावाभ्यामात्मगतमेव विचिन्तितम् "भगवान् तुर्य्याऽऽश्रमं परिजिघृक्षुः" इति चिन्तयित्वाऽपि प्रभुतेजसा पराभूताभ्यां न किञ्चिदपि वक्तुमशक्यत। परेद्यवि "आचार्य्यरत्न त्वयैतस्य कर्म्मणः पूर्व्वक्रिया क्रियताम्" इत्युक्तेन मया भगवानवादि तत् किं कर्म्मेति। तदनु गदितं भगवता मयैतत् कर्त्तव्यमिति। समनन्तरं प्रतिपत्तिमूढेन मया मूकवदनुत्तरेण रोदितुमेव प्रवृत्तम्। समनन्तरमनायत्त्यैव विधिवद्विहितं सकलमेव कर्म्म। ततो यद्वृत्तं तद्वाचा वक्तुं न शक्यते।

सर्व्वे। आकर्ण्य सविषादम्। हा देव कथमिदमध्यवसितम्। अथवा मद्विधानामेव दुःखद्रुम-फल-कालविलसितमिदं कि-

मनुयोज्यन्ते प्रभुचरणाः। हन्त हन्त स्मरणादग्रारूढमपि तन्नो मनः कृन्तति कथमाचार्य्य भवता दृष्टम्। इति वैक्लव्यं नाटयन्ति।

अद्वै। किं तावत्तदाश्रमसमुचितं नामाङ्गीकृतं भगवता।

आचा। कृष्णचैतन्य इति।

अद्वै। सचमत्कारम्। अहो समुचितमेवैतत्।

कृष्णस्वरूपं चैतन्यं कृष्णचैतन्यसञ्ज्ञितः।
अत एव महावाक्यस्यार्थो हि फलवानिह॥

केशवभारती हि श्रुतिरेव तस्याः केशवस्य भारतीत्वात्। यथा
मयाऽऽदौ ब्रह्मणे प्रोक्तो धर्म्मो यस्यां मदात्मक इति।

अतः केशवभारतीप्रतिपादितं श्रुतिप्रतिपाद्यमेवेति तत्कथयाऽऽचार्य्य कथय।

किं तत्रास्ति किमन्यतः स भगवान्

आचा।———तत्कालमेव प्रभ-
र्धृत्वा मस्करिभूमिकां चलितवान्

अद्वै।———त्वान्नो किमप्युक्तवान्।

आचा। प्रेमान्धः स्खलिताङ्घ्रिरस्रुसलिलैर्निर्धौतवक्षःस्थलः
स्वात्मानञ्च न वेद हन्त किमसौ हा हन्त मां वक्ष्यति॥

अद्वै। भवान् कथं नानुगतः।

आचा। नित्यानन्दस्त्वकथयदिदं यामि देवस्य पश्चात्
पश्चादेनं पथि पथि परिभ्राम्य तैस्तैरुपायैः।
अद्वैतस्यालयमपि नयाम्येष याहि त्वमेतां
वार्त्तामार्त्तानुपहर सुखं प्रापयाद्वैतमुख्यान्॥

अद्वै। धन्योऽसि नित्यानन्ददेव धन्योऽसि। जितं भवता निष्कैतवसौहृदेन तदागच्छतानया वार्त्तया भगवतीं शचीमाश्वास्य वयमपि समुचितमाचराम। इति निष्क्रान्ताः सर्व्वे॥

सन्न्यासपरिग्रहो नाम चतुर्थोऽङ्कः॥

---

## पञ्चमाङ्कः।

ततः प्रविशति श्रीकृष्णचैतन्यः पश्चान्नित्यानन्दश्च।

श्रीचै। एतां समास्थाय परात्मनिष्ठा-
मध्यासितां पूर्व्वतमैर्महद्भिः।
अहं तरिष्यामि दुरन्तपारं
तमो मुकुन्दाङ्घ्रिनिषेवयैव॥

इति स्खलितं नाटयति।

नित्या। स्वगतम्। अहो अद्भुतम्।
प्रेमामृतं किल तथाविधमेव किन्तु
निर्व्वेदखेददहनेन शृतत्वमेत्य।
आवर्त्त्यमानमिव गच्छति पिण्डभावं
कालेऽस्य हृद्घ्रण इव व्यथनाय भावि॥

तदेकाकिना मया किं क्रियते भवतु चिन्तयामि। इति पुनर्निरूप्य। अहो अद्भुतम्।

नृत्योर्मीकः प्रकटितमहोल्लासहुङ्कारघोषः
स्वेदस्तम्भप्रमर्त्तितविलसद्भावरत्नावलीकः।
अन्तर्वेगः समजनि विभोः सोऽयमानन्दसिन्धु-

नो जानीमः परिणतिरहो भाविनी कीदृगस्य ॥

अहो बलवता वातेन चालितः केशरपरागपुञ्ज इव चलत्येषो मयाऽपि सत्वरेणानुगन्तुं न शक्यते। विरतसकलेन्द्रियवृत्ति-स्तत इत एव गच्छन्नस्ति न दृष्ट्वेश्यपुरस्सरं क्वापि। तथा हि

अपन्थाः पन्था वा न भवति दृशोरस्य विषयः
किमुच्चं नीचं वा किमथ सलिलं वा किमु वनम्।
प्रभिन्नोऽयं वन्यो गज इव चलत्येव न पुनः
पुरो वा पश्चाद्वा कलयति न चात्मानमपि च ॥

भवति हि।

आत्मारामाः किमपि दधते वृत्तिहीनेन्द्रियत्वं
प्रेमारामा अपि भगवतो रूपमात्रैकमग्नाः।
स्वानन्दस्थो भवति यदि चेदीश्वरोऽपि क्व भेदो

आ ज्ञातम्। निम्नानन्दो भवति भगवान् जीव आनन्द-निम्नः ॥

तदिदानीं किं करोमि। इति चणं स्थित्वा।

नाहारोऽद्य दिनत्रयं न च पयः पानं किमन्याः क्रियाः
कौपीनैकपरिच्छदो निजसुखावेशैकमात्रानुगः।
गच्छन्नेव दिनं निशामपि विभुर्नो वेत्ति किं कुर्म्महे
हे गौराङ्ग कृपानिधे कुरु कृपामार्त्ते मयि प्रीयताम् ॥

चणं स्थित्वा। एतेन किञ्चिदाश्वस्तमपि भवति चेतः। तद्यथा

आनन्दवैवश्यमिदं महाप्रभो-
र्बभूव नः सम्प्रति जीवनौषधम्।

विभ्रामयन् वर्त्म विवेचनाक्षमं
नेष्येऽहमद्वैतविभोर्गृहानमुम् ॥

इति साश्वासमनुगच्छति । नेपथ्ये । हरिं वद हरिं वद । इति सम्भूय कोलाहलः ।

नित्या । पुरोऽवलोक्य । अये अद्भुतमिदम् । यदमी गोरक्षबाला भगवन्तमालोक्य सकौतुकाऽऽदरभक्तिश्रद्धानन्दचमत्कारं हरिं वद हरिं वदेति उच्चैर्जल्पन्ति ।

भगवान् । पूर्व्वाभ्यासेन हरिध्वनिं श्रुत्वा किञ्चिदानन्दसुप्तोत्थित इव हरिध्वन्यनुसारिणीं दिशं नयनकमले समुन्मील्यावलोकयति ।

नित्या । निरूप्य । अहो उपकृतं गोरक्षडिम्भैः यदमीषां हरिध्वनिमाकर्ण्य किञ्चित्तरामानन्दनिद्रोत्थित इवायं महामन्त्राकृष्ट इव फणिदष्टस्तमेव पन्थानमनुसर्पति ।

भगवान् । उपसृत्य । ब्रूत भो ब्रूत हरिम् । इति पुनः पुनः प्रजल्पति ।

प्रविश्य गोरक्षकाः शिशवः परितो दण्डवन्नत्वा करतालिकाभिर्हरिसङ्कीर्त्तनं कुर्व्वन्ति । भगवान् सस्पृहमाकर्णयन् मुहूर्त्तं प्रस्थानतो विरमति ।

नित्या । सानन्दम् ।

उन्माद आनन्दकृतो हि नाना-
चापल्यकृज्जाड्यकृदप्यमन्दम् ।
चापल्यजाड्योभयकृच्च कश्चित्
कश्चिद्द्वयस्तनया समानः ॥

तदिदानीं चरमावस्थ इव भगवत आनन्दोन्मादो जातः। तथा हि।

उन्मील्य दृशौ पश्यति न किमपि विषयीकरोत्येषः।
अर्द्धवधिर इव किञ्चिच्छृणोति न तदर्थमुपयाति॥

भगवान्। पाणिकमलेन तेषां शिरः परामृश्य। अये साधु कीर्त्तितं भवद्भिर्भगवन्नाम कृतार्थीकृतश्चाहम्। तज्जानीत वृन्दावनं केन पथा गम्यते।

नित्या। सहर्षम्। अयमवसरो मम। इति तेषां मध्यादेकमानीय। तात एष मार्गो वृन्दावनस्येति कथय।

बालकः। जइ आणवेदि भअवं (१)। इत्युपसृत्य। भो भअव एसो मग्गो वुन्दावणस्स (२)। इति नित्यानन्दोपदिष्टमार्गं दर्शयति।

भगवान्। सानन्दावेशं तमेव मार्गमनुक्रामति।

शिशवः। प्रणम्य निष्क्रामन्ति।

नित्या। हन्त निस्तीर्णोऽस्मि। सम्प्रति सम्पत्स्यते मे मनोरथः। यदनेन पथैवाद्वैतवाटीमासादयितुं शक्यते। इति तेन यथा तमनुगच्छन् कियद्दूरं गत्वा सपरामर्शम्। अहो कथमहं न परिचीये परपरिचयदशा किञ्चित्तरामिवास्य जाताऽस्ति तत्परोक्षे च निजसौभाग्यम्। इति निकटमुपसर्पति।

भगवान्। "एतां समास्थाय परात्मनिष्ठाम्" इत्यादि पुनः

---

१ यथा आज्ञापयति भगवान्।
२ भो भगवन् एष मार्गो वृन्दावनस्य।

पठित्वा। अहो सम्यग्गीतं भिक्षुणा "मुकुन्दसेवयैव तमस्तरिष्यामि न त्वनया परात्मनिष्ठया"। अस्या आस्थामात्रं कार्य्यं न त्वेषैवोद्देश्या तद्वृन्दावनं गत्वा मुकुन्दसेवैव मानसी कर्त्तव्या। इति आकाशे लक्ष्यं बद्ध्वा। हंहो कियद्दूरे वृन्दावनम्।

नित्या। उपसृत्य। देव दिवसैकप्राप्यमस्ति वृन्दावनम्।

भगवान्। स्वप्नजाग्रतोरन्तरालदशामापन्न इव सचमत्कारम्। कथमहो श्रीपादनित्यानन्दोऽसि।

नित्या। देव स एवाहम्। इत्यर्द्धोक्ते वाष्परुद्धकण्ठस्तिष्ठति।

भगवान्। श्रीपाद कथय कुतो भवन्तः।

नित्या। देवस्य वृन्दावनजिगमिषामाश्रुत्य मयाऽपि तद्दिदृक्षया चलता भगवत्सङ्गो गृहीतः।

भगवान्। भद्रं भो भद्रम्। एहि सहैव गच्छाव। इति सानन्दं गच्छति।

नित्या। भगवन्नितः। इति कियद्दूरं नीत्वा। भगवन् इतः कियद्दूरे यमना भगवती वर्त्तते तदवगाहनं कर्त्तुमुचितम्।

भगवान्। हन्त यमुनाऽद्य विलोकितव्या।

नित्या। अथ किम्।

भगवान्। हर्षं नाटयित्वा। श्रीपाद क्व सा।

नित्या। इत इतः। इति कियद्दूरं नीत्वा गङ्गामासाद्य। भगवन्नियं यमुना।

भगवान्। सानन्दं प्रणम्य स्तौति।

चिदानन्दभानोः सदा नन्दसूनोः
परप्रेमपात्री द्रवब्रह्मगात्री।
अघानां लवित्री जगत्क्षेमधात्री
पवित्रीक्रियान्नो वपुर्मित्रपुत्री॥

नित्या। भगवन्नवगाह्यतामियम्।

भगवान्। यथारुचितम्। इति स्नानमभिनयति।

नित्या। स्वगतम्। अहो निर्वृतोऽस्मि महामत्तवन्यकुञ्जरो मन्त्रेणैव वशीकृतः। तत्परिशेषमस्य कर्म्मणः किमप्यस्ति तदपि सम्पादयामि। इति परितोऽवलोक्य कञ्चिदाकारयति।

प्रविश्य कश्चित्पुरुषः प्रणमति।

नित्या। जनान्तिकम्। अये इदमनतिदूरे पारेगङ्गं भगवतोऽद्वैतस्य पुरम् त्वमितस्त्वरितं गत्वा विज्ञापय "नित्यानन्दः केन चिदन्येन सन्न्यासिना सह निकटवर्त्ती भवन्तमपेक्षते तत्त्वरताम्"।

पुरुषः। एषोऽहं तथा करोमि। इति सत्वरं निष्क्रान्तः।

नित्या। स्वगतम्। अहो अद्य दिनत्रयं जातं जलस्पर्शोऽपि न जातस्तदहमपि स्नामि। इति तथा करोति।

नेपथ्ये। आम्नायाग्रदिगुणवलितैस्तद्गुणैरेव बद्धाः
प्राणा नो यदिरहविधुरा हन्त गन्तुं न शेकुः।
सम्प्रत्येतैरुपकृतमहो तन्मुखं दर्शयद्भि-
र्दिष्टे हीष्टे भवति सहसा हन्त वामोऽप्यवामः॥

नित्या। दूरादाकर्ण्य। अहो आचार्य्य एवायं प्रस्तौति तत्-

सुविहितमेव विधिना अतःपरं ममातिभारो लघूभूतः। भगवन्तमालोक्य। अहो कष्टम्।

अम्भःस्यन्दैस्तिमितवपुषं लज्जयाऽभ्यासहानैः
कौपीनाच्छादनमपि न निर्गाल्य निःसारिताम्बुम्।
देवं रक्ताम्बुजदलचयैश्छाद्यमानोत्तमाङ्गं
स्नानोत्तीर्णं करिवरमिव स्वर्णगौरं निरीक्षे॥

तदाकलयामि कियान् विलम्बोऽद्वैतागमनस्य। इति पुरोऽवलोकयति।

ततः प्रविशति उत्कण्ठां नाटयन् परितोऽपरिमितपरिवारोऽद्वैतः।

अद्वैतः। पुरोऽवलोक्य। अहो अयमयं देवः।

चूडावियोगादरुणेन वाससा
दूरादसौ चेदनसाविविच्यते।
तथाऽपि हेमप्रतिमेन तेजसा
लावण्यभूम्नाऽपि स एव भाति नः॥

अहो अतिरम्यम्।

रक्ताम्बरं कनकपीतमिदं तदेव
देवस्य पश्यत वपुः सदृशीकरोति।
गौरारुणस्य परिपक्वमहारसस्य
वैराग्यसारसहकारफलस्य लक्ष्मीम्॥

इति त्वरमाणा उपसृत्य ध्यानामीलितनयनस्य भगवतः पुरतोऽवस्थाय मुक्तकण्ठं रोदिति।

भगवान्। सत्वरमक्षिणी समुन्मील्य। कथममी अद्वैताचार्य्य-महानुभावाः।

नित्या। भगवन्नेवमेतत्।

भगवान्। गाढं परिष्वज्य। कथय कथमिहस्थोऽहं भवद्भि-रवगतः कथं वा ममानुपदमेव भवानपि वृन्दावनमनुप्राप्तः। अथ वा ममैवायं स्वप्नः।

अद्वै। सबाष्पमात्मगतम्। अहो देवस्यात्र वृन्दावनप्रतीतिरेव जाताऽस्ति प्रकाशं देव नायं ते स्वप्नः। अपि तु स एवाहं पामरः। इति स्खलितं नाटयति।

देवः। बाहुभ्यामालिङ्ग्योत्थापयन् सबाष्पम्। भवतु भो अद्वैत त्वमेव वृन्दावनं त्वय्यनवरतं भगवत्पादकमलसंयोगात्। तत् कथय कुत्राऽऽगतोऽस्मि।

अद्वै। इयं भगवती भागीरथी इदमिदं पारे मदीयं पुरम्।

भगवान्। वहिर्वृत्तिं नाटयित्वा। श्रीपाद भवता यमुनेय-मित्यभाणि।

नित्या। अस्यां यमुना वर्त्तते न देव एव जानातु।

भगवान्। श्रीपादस्य नास्त्यैनैव नाटितोऽस्मि।

अद्वै। घ्राणायामेत्यादि यच्छब्दे तच्छब्दे च तच्छब्दं दत्त्वा पुनः पठति।

नित्या। भो अद्वैत अस्य दण्डग्रहणावधि ममैव दण्डो जातः। दिनत्रयमाहारविरहात्। देवस्य तु स्वानन्दभोगेनैव तृप्तिस्तदलमत्र कथाप्रसङ्गतुङ्गिम्ना।

अद्वै। परिजनकरात् प्रत्यग्रकौपीनाच्छादने आनीय पुनर्भगवन्तं स्नापयित्वा ग्राहयति सकरुणम्।

देवोचितञ्च परिधापितमस्ति पूर्व्वं
भिक्षूचितञ्च वसनं परिधापयामि।
लक्ष्मीः समा तव समश्च मुखप्रसादो
हा हन्त नो नयनयोर्विषमं तदेतत्॥

तदिदमनतिदूरमेव मे भवनं तदलं कर्त्तुमर्हन्ति भगवच्चरणाः।

भगवान्। एतदर्थमेव श्रीपादेनाहं प्रतारितोऽस्मि।

अद्वै। भगवान् कस्यापि प्रतार्य्यो न भवति किन्तु।

ईशोऽपि स्यात् प्रकृतिविधुरः स्वीयया माययैव
स्वच्छन्दोऽपि स्फटिकमणिवत् सन्निकृष्टेन योगात्।
इत्थं केचिद्वयमिह किल ब्रूमहे बालखेला-
प्रायं लीलाविलसितमहो सर्व्वमीशस्य सत्यम्॥

उभयथैव न प्रतार्य्योऽसि। अस्य च नैष दोषः श्रीपादत्वात्। श्रियं पातीति श्रीपः कृष्णः तमाददातीति तथैवानेन कृतं तदग्रे भवन्तु भगवन्तः। अद्य प्राथमिकी भिक्षा ममैवालये भवतु भगवतः।

भगवान्। यथा रुचितं भवते। तदादिश पन्थानम्।

अद्वै। इत इतः। इति नावमारोपयति।

नित्या। अपवार्य्य। भो अद्वैत नवद्वीपे कश्चित् प्रहितोऽस्ति।

अद्वै। अथ किम्। सर्व्वे समागतप्राया एव।

भगवान्। भो अद्वैत अपूर्व्वं नो भवद्भवनगमनम्।

अद्वै। श्रीवासस्येव क्व मे तादृशं सौभाग्यम् यस्य भवने प्रतिदिनमेव देवितं देवेन।

नित्या। भो अद्वैत अतःपरं महीयसी लोकयात्रा भाविनी स्वयं प्रकाशिनी हि भगवद्वार्त्ता तत्रापि भगवतो मथुरागमनं प्रथितमस्ति। सम्प्रति तद्भवनसुभगम्भावुक-भावुके भगवति सर्व्व एवाऽऽबालवृद्धतरुणाः करुणापारावारमधुनैवामुमवलोकयितुं समागमिष्यन्ति लोकाः। तद्यावत् तेषां तथाप्रचारेण न भूयते तावदलक्षिता एव भवद्भवनं प्रविशाम।

अद्वै। एवमेव। इति कतिचित्पदानि परिक्रम्य। भो देव इद-मिदमस्मद्भवनं तावत् प्रविश। इति सर्व्वे प्रवेशं नाटयन्ति।

नेपथ्ये। विश्वम्भरः स भगवान् जननीं प्रतार्य्य
छलाद्यतेरनुकृतिं मथुरां यियासुः।
व्याजेन शान्तिपुरमागमितः स नित्या-
नन्देन भोस्त्वरत भोस्त्वरतेत्युवाच॥

नित्या। आकर्ण्य निरूप्य च।

अद्वै। श्रुतं दृश्यताञ्च तदिहत्या एवैते सपद्येव परस्परहसा बभूवुः। कियता विलम्बेन लब्धसङ्ख्या भविष्यन्ति। तदिह द्वारि दौवारिकैर्भूयताम्।

अद्वै। प्रतिद्वारि दौवारिकान्नियोज्य देवमग्रतः कृत्वा नित्यानन्देन सह प्रवेशं नाटयन् निष्क्रान्तः।

ततः प्रविशन्ति भगवद्दर्शनोत्कण्ठिताः पुरुषाः

केचित्।

नवद्वीपे यादृक् समजनि दृशोर्नः पदमसौ
तदन्याकारत्वं यदपि मनसः क्षोभजनकम्।
तथाप्युत्कण्ठा नः शिव शिव महत्येव वलते
ह्यनाहार्य्यं वस्तु प्रकृतिविकृतिभ्यां समरसम्॥

तदधुना जानीम क्व भगवान्। इति परितः परिक्रामन्ति।

अन्यस्यां दिशि

अन्ये।

पूर्व्वाश्रमे मधुरिमप्रथिमा य आसी-
दस्येश्वरस्य स दृशोरतिथिर्न नोऽभूत्।
अद्यापि चेन्न स विलोक्यत एव तन्नो
धिग्जन्म धिग्वपुरहो धिगसून् धिगक्षि॥

अपरे। हन्त भो आगच्छतागच्छत। भगवानद्वैतपुरं प्रविष्ट इति श्रुतं तत्रैव प्रविशाम। इति सोत्कण्ठमुपसृत्य। अहो अमी दौवारिकाः सर्व्वानेव निवारयन्ति। भद्रममी एवानुनेया दातव्यञ्च किञ्चिदेतेभ्यः। इति निकटमुपसर्पन्ति।

ततः प्रविशन्ति वेत्रपाणयो द्वारोपान्तनिविष्टा दौवारिकाः।

दौवा। अरे पुरुषाः क्षणं विलम्बन्तां यावत्तुरीयाश्रमपरिग्रहः कृतो भगवता तावदनाहारेणैव स्थीयते। अद्यैव भिक्षा भविष्यति। तदधुना कोलाहलो न कार्य्यः। उपविश्य स्थीयतां भिक्षोत्तरं भगवानवलोकनीयः।

नेपथ्ये। भगवन्नित इतः।

दौवा। निरूपयामि। इति समुच्छ्रितं स्थलमारुह्य उद्ग्रीविकमालोक्य च। अये कृतभिन्न एव भगवान्। यदयम्

श्रीखण्डपङ्कपरिलिप्ततनुर्नवीन-

शोणाम्बरो धवलमाल्यविराजिवक्षाः।

हेमद्युतिर्विजयते हिमसान्ध्यराग-

गङ्गाप्रवाहरुचिभागिव रत्नसानुः॥

तदेते समुत्कण्ठिताः कथममुं द्रक्ष्यन्ति। इति पुनर्निभाल्य। अहो साधु समाहितमद्वैतदेवेन यदनेनायमुच्चतरामुपकारिकामध्यारोपितो भगवान्। तदधुना सर्व्वे सुखं द्रक्ष्यन्ति स्वनाम च यथार्थमनयोपकारिकयाऽकारि। पुरुषाः सर्व्वे सोत्कण्ठं हरिं वदेति सम्भूय निगदन्ति।

ततः प्रविशति यथा निर्द्दिष्टोपकारिकातलोपविष्टो भगवानद्वैतादयश्च।

अद्वै। केयं लीला व्यरचि भवता योऽयमद्वैतभाजा-

मत्यन्तेष्टस्तमधृत भवानाश्रमं यत्तुरीयम्।

भगवान्। विहस्य।

भो अद्वैत स्मर किमु वयं हन्त नाद्वैतभाजो

भेदस्तस्मिंस्त्वयि च यदियान् रूपतो लिङ्गतश्च॥

अद्वै। वागीश्वरेण किमुचितं वचनानुवचनम्।

भगवान्। तत्ततोऽवधारयन्तु।

विना सर्व्वत्यागं भवति भजनं न ह्यसुपते-

रितित्यागोऽस्माभिः कृत इह किमद्वैत कथया।

अयं दण्डो भूयान् प्रबलतरसो मानसपशो-

रितीवाहं दण्डग्रहणमविशेषादकरवम् ॥

अद्वै। सर्व्वमिदं प्रतारणमेव किन्तु "सन्यासकृच्छमः शान्तो निष्ठाशान्तिपरायण" इत्यादि नाम्नां निरुक्त्यर्थमेवैतत्।

दौवा। पुरतः सर्व्वानवलोक्य। अहो आश्चर्य्यम्।

एतावत्यपि दुर्गमे जनघटासङ्घट्टनोच्चावचे
सर्व्वैरेव यथासुखं प्रभुरसौ पारेपरार्द्धैर्नृभिः।
अव्यग्रैरवकाशलम्भनसुखावस्थानसुस्थैर्यथा-
कामं लब्धतदीयपूर्णकरुणादृक्पातमुद्वीच्यते ॥

न चेदमसंवादि। यतः

उत्तीर्णोऽद्य भवाब्धिरद्य पिहितं द्वारं यमस्यापि च
प्राप्तं मानुषजन्मलम्भनफलं तप्तञ्च सर्व्वं तपः।
यद्देवः करुणाकटाक्षसरसोऽदर्शीति सर्व्वैरहो
प्रत्येकं प्रथयद्भिरात्मसुभगीभावः समुद्घुष्यते ॥

नेपथ्ये परितः कोलाहलः।

पुरुषाः। अहो अमी भगवज्जन्मस्थलीनिवासिनः सर्व्वे समागच्छन्ति तदधुना महता सम्मर्द्देन भवितव्यं वयमित इदानीमपसराम। इति सर्व्वे निष्क्रामन्ति।

ततः प्रविशन्ति सर्व्वे नवद्वीपवासिनः।

ते।

अद्याऽऽन्ध्यं गतमेव नो नयनयोरद्य प्रसन्ना दिशः
शुष्कास्थाद्य जिजीविषाव्रततयः प्रोन्मीलयन्त्यङ्कुरान्।
नष्टेऽन्तःकरणे च केनचिदहो चैतन्यमप्याहितं

येनास्माकमहो बताद्य भविता चैतन्यचन्द्रोदयः ॥

इति सोत्कण्ठमुपसर्पन्ति।

अद्वै। आलोक्य।

अग्रे निधाय भगवज्जननीं समीयुः
श्रीवासपण्डितमुखाः सुहृदस्त एते।
अन्ये च बालतरुणस्थविराः किमन्य-
द्देशः स एष उदपादि स एष कालः ॥

भगवान्। सत्वरमवतारं नाटयति।

दौवारिकाः। सादरं प्रवेशयन्ति।

भगवान्। मातरं प्रणमति।

माता। सभयभक्तिवात्सल्यपरितोष-शबलिताश्रुपुलकगद्गदं संस्कृतेन।

वैराग्यमेव भव किं किमु वानुभूति-
र्भक्तिर्नु वा किमु रसः परमस्तनूभृत्।
तात स्तनन्धयतयैव भवन्तमीक्षे
लब्धोऽधुनाऽपि न कदाऽपि पुनस्त्यजामि ॥

इति सोत्कण्ठमालिङ्गति।

श्रीचै।

भगवति जगन्मातर्माऽतः परं फलमुत्तमं
किमपि फलितुं वात्सल्याख्या लता भवति क्षमा।
भवति भवती विश्वस्यैवानुपाधिसुवत्सले-
त्यथ भगवता नूनं चक्रे क्षमापि शरीरिणी ॥

इति पुनः पठति ।

**माता ।** पुनरालिङ्ग्य प्रणमति ।

**अद्वै ।** तामुत्थाप्य स्वयमन्तःपुरे प्रवेशयन्निष्क्रान्तः ।

**भगवान् ।** यथायथं सर्व्वानेवालिङ्गनस्पर्शनदर्शनप्रश्नादिभिरनुरञ्जयति ।

पुनः सत्वरं प्रविश्य

**अद्वैतः ।** कः कोऽत्र भोः सर्व्वानेवाबालवृद्धतरुणानाचाण्डालानांश्च यथोपजोषमावासभक्ष्यपेयादिभिरुपचरन्तु भवन्तः ।

प्रविश्यापटोक्षेपेण ।

**एकः ।** अयमयमहं तथा करोमि । इति निष्क्रान्तः ।

**अद्वै ।** भगवन्तमुपसृत्य ।

> सोऽहं त एते स भवान् स चैषां
> प्रेमा तवेयं करुणाऽपि सैव ।
> सर्व्वं तदेवास्ति सुखैकहेतु-
> रन्यादृशं रूपमतोषहेतुः ॥

**भगवान् ।** अद्वैताद्वैत मेवम् ।

> श्यामास्रुतं श्रोतसि पातितं वपु-
> स्तस्यैव तुङ्गेन तरङ्गरंहसा ।
> यां यां दशामेति शुभाऽशुभाऽथवा
> सा सैव मे प्रेम चरीकरीति ॥

तदेहि चिरदृष्टैरेभिः सह रस उपविशाम । इति निष्क्रान्ताः सर्व्वे ॥

अद्वैतपुरविलासो नाम पञ्चमोऽङ्कः ॥

---

## षष्ठाङ्कः ।

ततः प्रविशति रत्नाकरः ।

रत्नाकरः । अहो अद्य कथमकस्मात् प्रेयसी सुरसरिद्विमनस्केव दृष्टा तदस्या मनोदुःखकारणं प्रष्टव्यमस्ति । इति पुरोऽवलोक्य । कथमियं तदवस्थैव दृश्यते देवी तदुपसृत्य पृच्छामि । इति उपसर्पति ।

ततः प्रविशति यथानिर्द्दिष्टा गङ्गा ।

गङ्गा । हद्दी हद्दी जस्स पाअ-सेअ-सलिलत्तेण मह एदारिसं सोहग्गं तस्स पहुणो चिरआलं अङ्गसङ्गो लम्भिओ । अदोवरो को मे भाअधेओ । तह तं लम्भिअ पुणोवि ण लम्भणिज्जो विअ दीसइ अदोवरं वा किं मे असुहं । ता किं करेमि मन्दभाइणी (१) । इति चिन्तयती चणं तिष्ठति ।

रत्ना । उपसृत्य । भागीरथि कथं विमनायसे ।

गङ्गा । अज्जउत्तो अज्जउत्तो किं पुच्छसि मन्दभाइणी क्खु अहं (२) ।

रत्ना । भागीरथि कथमिव ।

गङ्गा । संस्कृतेन ।

---

१ हा धिक् हा धिक् यस्य पाद-सेक-सलिलत्वेन मम एतादृशं सौभाग्यं तस्य प्रभोश्चिरकालमङ्गसङ्गो लब्धः । अतोऽपरः को मे भागधेयः । तथा तं लब्ध्वा पुनरपि न लम्भनीय इव दृश्यते । अतःपरं वा किं मे ऽशुभम् । तस्मात् किं करोमि मन्दभागिनी ।

२ आर्यपुत्र आर्यपुत्र किम्पृच्छसि मन्दभागिनी खलु अहम् ।

यत्पादशौचजलमित्यलमस्मि विश्व-
विख्यातकीर्त्तिरसकौ रसकौतुकीशः ।
नित्यावगाहकलया रसयाञ्चकार
मामद्य स त्यजति हा वत तेन दूये ॥

रत्ना। आं जानामि। स खलु मथुरागमनतः प्रत्यावृत्य सम्प्रत्यद्वैतालये समागतोऽस्तीति श्रुतं तत्कथं दूयसे।

गङ्गा। होइ एवम्मेदं। किन्तु णअद्दीअदो आअदेसु सिरिवासपहुदिएसु बन्धुवग्गेसु असस्सिं दिअहे सिरिसईदेईए पाइअं अण्णं सव्वेहिं अप्पवग्गेहिं सह सरसहासविलासं भुञ्जिअ तेहिंज्जेव सद्धं उपविसिअ भअवं किम्पि गदिदुं पउत्तो (१)।

रत्ना। किं तत्।

गं। भो अद्वैतप्रभृतय इदं श्रूयतां यज्जनन्या
युष्माकञ्च प्रणयिसुहृदामाज्ञया न प्रयातम्।
विघ्नस्तेन व्यजनि मथुरां गन्तुमीशे न तस्मा-
दाज्ञां सर्व्वे ददतु कृपया हन्त यायामिदानीम्॥

रत्ना। ततस्ततः।

गं। तदो अद्दईआचारिएण गदिदं (२)।

---

१ भवति एवमिदम्। नवद्वीपत आगतेषु श्रीवासप्रभृतिकेषु बन्धुवर्गेषु अन्यस्मिन्दिवसे श्रीशचीदेव्या पाचितमन्नं सर्वैरात्मवर्गैः सह सरसहासविलासं भुक्त्वा तैरेव सार्द्धं उपविश्य भगवान् किमपि गदितुं प्रवृत्तः।

२ ततोऽद्वैताचार्य्येण गदितम्।

तव प्रीत्या याहीत्यभिलपति सर्व्वो यदि जन-
स्तदा सर्व्वस्यैव त्वदुपगमनात् पूर्व्वमसवः।
न धिक्कारान् सोढुं वत भवति नः पाटवमिति
प्रयास्यन्त्येवामी प्रथममनुभूय व्यसनिताम्॥

रत्ना। भद्रं भो अद्वैत भद्रम्। ततस्ततः।

गं। तदो भअवदा सप्पणाअं पुणोवि भणिदं (१)। भो अद्वैतप्रभृतयः

गृहीतोऽयं वेशो यदिह निजदेशस्य स विधे
तदा स्थातुं सार्द्धं प्रणयिभिरिदानीमनुचितम्।
बुधा यूयं विज्ञा भवति जननी चास्य वपुषः
समाधां कुर्व्वन्तु स्वयमहह किं वच्मि बहुलम्॥

रत्ना। भगवताऽपि समीचीनमुक्तम्। ततस्ततः।

गं। तदो सव्वेहिं भअवदो बन्धुजनेहिं आचारिओजणणीए सईदेईए णिअडं गदुअ मन्तिदं (२)।

रत्ना। ततस्ततः।

गं। अस्सिं अत्थे जदो कस्सवि सम्मई ण होइ तदो जणणीए उत्तं। भो भो जइ धम्मदोसो होइ तदो अप्पणो सुहकए तस्स खल-अण-किद किम्बदन्ती कधं करणिज्जा। अप्पणो

---

१ ततो भगवता सप्रणयं पुनरपि भणितम्।

२ ततः सर्व्वैर्भगवतो बन्धुजनैराचार्य्यजनन्याः शचीदेव्या निकटं गत्वा मन्त्रितम्।

जह तह होउ। तदो जअणाहच्छेत्तंज्जेव जं गच्छदि तंज्जेव भद्दं। कदाचि पउत्तीवि लहीअदित्ति आसा होइ (१)।

रत्ना। साधु मातः साधु। अतिक्रान्ताऽस्ति भवत्या देवहूतिः। ततस्ततः।

गं। तदो सव्वेज्जेव विवसा हुविअ पुणोवि गदिदवन्तो (२)। "मातः कथमिदमुक्तम्। अतः परमस्माभिरिदं श्रुतिप्रतिपादितमिव खण्डितुं न शक्यते भवद्वचः"।

रत्ना। ततस्ततः।

गं। तदो तए गदिदं। अम्हाणं जह तह होउ। अस्स दोसं जं खलजणो पेक्खिस्सदि तं क्खु दुस्सहं। जअणाहं जइ गच्छदि तदो मज्झरे तुम्हे गन्तुं शक्कध मए पउत्तो लहीअदि (३)।

रत्ना। ततस्ततः।

गं। तदो सव्वे भअवदो णिअडं आअदुअ देईए कधिदं णिअदिदवन्तो (४)।

---

१ अस्मिन्नर्थे यदा कस्यापि सम्मतिर्न भवति तदा जनन्या उक्तम्। भो भो यदि धर्म्मदोषो भवति तदा आत्मनः सुखकृते तस्य खल-जनकृता किम्बदन्ती कथं करणीया। आत्मनो यथा तथा भवतु। ततो जगन्नाथक्षेत्रमेव यद् गच्छति तदेव भद्रं कदाचित् प्रवृत्तिरपि लभ्यते इति आशा भवति।

२ तदा सर्वे एव विवशा भूत्वा पुनरपि गदितवन्तः।

३ तदा तया गदितम्। अस्माकं यथा तथा भवतु। अस्य दोषं यत् खलजनः प्रेक्षिष्यति तत् खलु दुःसहम्। जगन्नाथं यदि गच्छति तदा यूयं गन्तुं शक्नुत। मया प्रवृत्तिर्लब्धा।

४ तदा सर्वे भगवतो निकटमागत्य देव्या कथितं निगदितवन्तः।

रत्ना। ततस्ततः।

गं। तदो भअवं सद्दरिसअं गदिदवं (१) यथाऽऽज्ञापयति विश्वजननी तदाज्ञापयत गच्छामि।

रत्ना। ततस्ततः।

गं। तदो सव्वेहिं गदिदं (२) देव कियन्ति दिनानि स्थीयतां पश्यामस्ते चरणकमलमिति।

रत्ना। ततस्ततः।

गं। तदो जणणीए ताणं च पमोअत्थं तिसदिणाणि तत्थ ठाऊण पूव्वं विअ भअवदीए जणणीए अच्चुदाणन्दजणणीए च पाइदं अण्णं सव्वेहिं सह भुञ्जिअ ताणं अणुरञ्जिअ चउत्थे दिअहे गन्तुं पउत्ते सव्वेहिं मन्तिअ णित्याणन्द-जअदाणन्द-दामोदर-मुउन्दाओ सङ्गे दिण्णाओ। तदो गदेसु णअद्दीअवासिसु तेहिं सद्धं देवे पत्थिदे अद्दईआचारिएण बहुदरं रोइदं। देवो तं अणामन्तिअ चलिदो (३)।

रत्ना। हन्त इदानीं गौडाधिपतेर्यवनभूपालस्य गजपतिना

---

१ ततो भगवान् सद्दर्षं गदितवान्।

२ ततः सर्वैर्गदितम्।

३ ततो जनन्यास्तेषाञ्च प्रमोदार्थं त्रीणि दिवसानि तत्र स्थित्वा पूर्वमिव भगवत्या जनन्या अच्युतानन्दजनन्या च पाचितमन्नं सर्वैः सह भुक्त्वा ताननुरञ्ज्य चतुर्थे दिवसे गन्तुं प्रवृत्ते सर्वैर्मन्त्रित्वा नित्यानन्द-जगदानन्द-दामोदर-मकुन्दाः सङ्गे दत्ताः। ततो गतेषु नवद्वीपवासिषु तैः सार्द्धं देवे प्रस्थिते अद्वैताचार्येण बहुतरं रोदितम्। देवस्तमनामन्त्र्य चलितः।

सह विरोधे गमनागमनमेव न वर्त्तते कथमयं चतुर्भिरेव परिजनैः सह गच्छति।

गं। संस्कृतमाश्रित्य। आर्य्यपुत्र नैतदाश्चर्य्यं पश्य पश्य।

योऽन्तर्यामी भवति जगतां योयऽमव्याजबन्धु-
र्यस्य द्वेष्यो न जगति जनः कोऽपि के तं द्विषन्तु।
द्वैराज्येऽस्मिन् पटुविकटयोः सेनयोरेव मध्या-
न्निष्प्रत्यूहं कलय चलितो बन्धुभिः पञ्चषैः सः॥

अपि च। ग्रामे ग्रामे पटुकपटिनो घट्टपाला य एते
येऽरण्यानीचरगिरिचरा वाटपाटच्चराश्च।
शङ्काकाराः पथि विचलता तं विलोक्यैव साचा-
दुद्यद्बाष्पाः स्खलितवपुषः चौणिपृष्ठे लुठन्ति॥

रत्ना। भवति हि भगवान् सहजाऽऽसुरभाव-भावितान्तःक-रणानेव नानन्दयति तदितरान् परम-पामरानपि दृक्पातेन पवित्रयति चित्रयति च भक्तिरसेन।

रत्ना। ततस्ततः।

गं। तदो निरन्तर-सञ्चरन्त-गअवइ-महासामन्त-सन्त-दि-महादन्तावल-तुङ्गतुरङ्ग-पत्तिसम्पत्ति-दुग्गमं राअपहं उज्झिअ वणमग्गं ज्जेव अअगाहिय चलिदवन्तो (१)।

रत्ना। ततस्ततः।

---

१ ततो निरन्तर-सञ्चरद्गजपति-महासामन्त-सन्तति-महादन्ताव-ल-तुङ्गतुरङ्ग-पत्तिसम्पत्ति दुर्गमं राजपथमुज्झित्वा वनमार्गमेव अव-गाह्य चलितवान्।

गं। संस्कृतेन। ततः।

आश्चर्य्यं प्रागद्द गद्दनं गाद्दमाने रघूणां
पत्यौ द्वीपिद्विरदमद्दिषा गण्डकाश्चण्डकायाः।
तत्कोदण्डप्रतिभयद्दता दुद्रुवुर्य्ये न एते
यन्माधुर्य्यंद्रवलवलभः स्तब्धतामेव दध्रुः॥

एव्वं कियन्ति दिणाणि वणे वणे चलन्तो विविद्द-तरु-लदा-सोद्दग्गमणुगेह्णन्तो पुणोवि राअ-पद्दं अङ्गीकिदवं (१)।

रत्ना। कुतः।

गं। संस्कृतेन।

रेमुणानगरमण्डलमूर्त्तिर्व्वेणुपाणिभगवत्प्रतिमूर्त्तिः।
प्राक्तनीति बहुमानत आसीद्दन्दनार्थमथराजपथस्थः॥

रत्ना। प्राक्तनीति कोऽर्थः।

गं। अअं क्खु देओ चउब्भुअ-रूअदोवि दुअ-भुअ-रूअ गोवीणाद्दंज्जेव्व भत्तेहिं भअणीअंत्ति भणन्ति केवि। केवि भणन्ति पुराअणो चउब्भुअ-मुत्तीज्जेव दीसइ सव्वत्थलेज्जेव ण क्खु दुअ-भुअ-रूआ गोवी-णाद्द-मुत्ती पुराअणीत्ति (२)।

---

१ एवं कियन्ति दिनानि वने वने चलन् विविध-तरु-लता-सौभाग्यमनुगृह्णन् पुनरपि राजपथम् अङ्गीकृतवान्।

२ अयं खलु देवश्चतुर्भुज-रूपतोऽपि द्वि भुज-रूपो गोपीनाथमेव भक्तैर्भजनीयमिति भणन्ति केऽपि। केऽपि भणन्ति पुरातनो चतुर्भुज-मूर्त्तिरेव दृश्यते सर्व्वस्थले एव न खलु द्वि-भुज-रूपा गोपी-नाथ-मूर्त्तिः पुरातनीति।

रत्ना। ते भ्रान्ताः कटकादौ साक्षिगोपालादयोऽतिप्राचीना एव ततः।

गं। संस्कृतेन।

दण्डवद्भुवि निपत्य ववन्दे तं स सोऽपि तमपूजयदुच्चैः।
अस्य मूर्द्ध्नि पतताऽलमकस्मात्शेखरेण शिरसः स्खलितेन॥

रत्ना। ततस्ततः।

गं। संस्कृतेन। ततो भगवता सप्रेम किञ्चिदुपश्लोकितम्।

तथा हि। न्यञ्चत्कफोणिनमदंसमुदञ्चदग्रं
तिर्य्यक्प्रकोष्ठकियदावृतपीनवक्षाः।
आरज्यमानवलयो मुरलीमुखस्य
शोभां विभावयति कामपि वामबाहुः॥

किञ्च। आकुञ्चनाकुलकफोणितलादिवाधो-
लब्धस्तुता मधुरिमाऽमृतधारयैव।
आप्लावयन् क्षितितलं मुरलीमुखस्य
लक्ष्मीं विलक्षयति दक्षिणबाहुरेषः॥

रत्ना। ततस्ततः।

गं। पुणोवि वणमग्गं लम्भिअ पुणोवि सक्खिगोपालदंसणत्थं कडअ-णामधेयं राअधाणीं गओ (१)।

रत्ना। दर्शनीय एवायम्। यः खलु प्रतिमाकार एव वस्तुतस्तु स्वयं भगवान्। यतः

---

१ पुनरपि वनमार्गं लब्ध्वा पुनरपि साक्षीगोपाल-दर्शनार्थं कटक-नामधेयां राजधानीं गतः।

साचित्वेन वृतो द्विजेन स चलंस्तस्यैव पश्चाच्छनैः
श्रीमत्कोमलपादपद्मयुगलेनारान्नदन्नूपुरम्।
दृष्टस्तेन विवृत्तकन्धरमहो माहेन्द्रदेशावधि
प्राप्यैव प्रतिमात्वमत्वरमनास्तत्रैव तस्थौ प्रभुः॥

ततश्चिरेण गजपतिमहाराजेन पुरुषोत्तमदेवेनायमानीय स्वराजधान्यां स्थापितः।

गं। एव्वन्नेदं (१)।

रत्ना। ततस्ततः।

गं। तदो तं आलोइअ अप्पणो हिअआदो णिक्कमिअ पुरदो अवट्ठिदं विअ मण्णमाणो पुणोवि तत्थ सअं पविसन्तो विअ मुहुत्तं आसि (२)। संस्कृतेन अथ किञ्चिदुपश्लोकितञ्च।

शोणस्निग्धाङ्गुलिदलकुलं माद्यदाभीररामा-
वक्षोजानां घुसृणरचनाभङ्गरिङ्गत्परागम्।
चिन्माध्वीकं नखमणिमहःपुञ्जकिञ्जल्कमालं
जङ्घानालं चरणकमलं पातु नः पूतनारेः॥

रत्ना। ततस्ततः।

गं। तदो सव्वेहिं एव्वंज्जेव दिट्ठं (३)।

रत्ना। कीदृशमिव।

---

१ एवमिदम्।

२ ततस्तमालोक्य आत्मनो हृदयतो निष्क्रम्य पुरतोऽवस्थितमिव मन्यमानः पुनरपि तत्र स्वयं प्रविशन्निव मुहूर्त्तमासीत्।

३ ततः सर्व्वैरेवमेव दृष्टः।

गं। संस्कृतेन।

वेणुवादनपरोऽपि स वेणुं स्वाधरात् क्षणमधो विनिधाय।
तेन सार्द्धमिव वर्धितमुद्भश्रद्धमीक्षितकथोऽयमलोकि॥

रत्ना। ततस्ततः।

गं। तदो तं दिणं तत्थज्जेव ठाऊण अवरस्सिं दिणे सिरि-पुण्डरीअ-णअणो दट्ठव्वोत्ति गुरुईए उक्कण्ठाए घोणन्त-हिअओ विअ तुरिअं पत्थिदो (१)।

रत्ना। ततस्ततः।

गं। तदो कमलपुरणामं गामं लम्भिअ किअ-णई-सिणाणे भअवदो देवउलं पेक्खिदुं अग्गदो गच्छन्तम्मि देवे णिअ-कर-ट्ठिअं देवस्स दण्डं णिच्चाणन्ददेएण किं एदेण अआपडूवल्लव-खण्डेण दण्डेणत्ति भञ्जिअ णई-मज्झम्मि णिक्खित्तो (२)।

रत्ना। ततस्ततः।

गं। तदो मुउन्दो भअवदो जहसाहस्स देवउलं पेक्खिअ भअवन्तं गदिदवं (३)। देव पश्य पश्य।

उत्क्षिप्तः किमयं भुवा दिनमणेराकर्षणार्थं भुजः

---

१ ततस्तद्दिनं तत्रैव स्थित्वा अपरस्मिन्दिवसे श्रीपुण्डरीक-नयनो द्रष्टव्य इति गुर्व्या उत्कण्ठया घूर्णित-हृदय इव त्वरितं प्रस्थितः।

२ ततः कमलपुरनामानं ग्रामं लब्ध्वा कृत-नदी स्नाने भगवतो देव-कुलं प्रेक्षितुम् अग्रतो गच्छति देवे निजकरस्थितं देवस्य दण्डं नित्या-नन्ददेवेन किमेतेन अकाण्डोपल्लवखण्डेन दण्डेनेति भङ्क्त्वा नदीमध्ये निक्षिप्तः।

३ ततो मुकुन्दो भगवतो जगन्नाथस्य देवकुलं प्रेक्ष्य भगवन्तं गदितवान्।

पातालात् किमु सत्यलोकमयितुं शेषः समभ्युत्थितः।
किं वा नागफणामणीन्द्रमहसां राशिर्जिहाणो दिवं
दिव्यं देवकुलं प्रभोरिदमिदं भो देव विद्योतते॥

रत्ना। देवि सर्व्वमधिगतं कथमत्र विमनायते भवती मत् सौभाग्ये सौभाग्यवती भवती पश्य पश्य।

यदर्थं बद्धोऽहं शिव शिव यदर्थञ्च मथित-
स्तदीयस्तातोऽसाविति न गणितं येन विभुना।
अहो कीदृग् भाग्यं मम हि स हरिस्ताञ्च दयितां
परित्यज्यैवास्मत्तटवटकुटुम्बी समभवत्॥

तदहि निकटं गत्वैव पश्याव।

गं। जहरुइदं अज्जउत्तस्स (१)। इति निष्क्रान्तौ।

प्रवेशकः। ततः प्रविशति परमाविष्टो भगवान् परितश्च नित्यानन्दादयः।

भगवान्। अभ्रंलिहोऽपि जगतां हृदयं प्रविष्टः
स्थूलोऽपि लोचनयुगान्तरमभ्युपेतः।
सिद्धः शिलाभिरपि यो रसवर्षशाली
प्रासाद एष पुरतः स्फुरतीश्वरस्य॥

इति सोत्कण्ठं परिक्रामति।

सर्व्वे। अहो मुहूर्त्तमात्रगम्योऽयं पन्था दीर्घातिदीर्घ इव जायते भगवतः किमत्र चिन्तयाम। भगवतो नीलाचलचन्द्रस्य

---

१ यथारुचितमार्य्यपुत्रस्य।

विलोकनं परिचारकाणामेव सुलभं नान्येषाम्। विशेषतः पारदेशिकानामस्माकं दुर्ल्लभमेव। विना राजपुरुषसाहाय्येन सुलभं न भवति।

मुकुन्दः। अस्त्युपायः।

अन्ये। कस्तावदसौ।

मुकु। अस्त्यत्र विशारदस्य जामाता सार्व्वभौमस्यावुत्तो भगवतः परमाप्ततमो गोपीनाथाचार्य्यः। यः खलु भगवतो नवद्वीपविलासविशेषाभिज्ञो युष्मद्विध इव।

अन्ये। तेन किं स्यात्।

मुकु। तेन सार्व्वभौमद्वारा सर्व्वमेव कारयितुं शक्यते।

सर्व्वे। हर्षं नाटयित्वा। साधूक्तं तर्हि तन्निलयः प्रथममन्वेष्टुमिष्टः। इति परिक्रामन्ति। ततः प्रविशति गोपीनाथाचार्य्यः।

आचार्य्यः। स्वगतम्।

दक्षिणं स्फुरति मे विलोचनं
सुप्रसादविशदं मनो मम।
वेद्मि नोऽद्य जगदीशदर्शनं
कीदृशं सुखमुदीरयिष्यति॥

इति जगन्नाथदर्शनार्थं परिक्रामति।

मुकु। अयमेष गोपीनाथाचार्य्यः।

नित्या। मुकुन्द शीघ्रं गच्छ गच्छ यावदसौ सिंहद्वारं न प्रविशति।

मकुन्दः। तथा करोति।

गोपी। अग्रतोऽवलोक्य। अये कोऽयम्। अपि कश्चिद्गौडीयो भविष्यति। निभाल्य। अये नावद्वीपः। पुनर्निभाल्य। अये भगवतो विश्वम्भरस्य प्रियसेवको मुकुन्द एव ततः फलितं शकुनेन। उपसृत्य। हंहो मुकुन्दोऽसि।

मुकुन्दः। आचार्य्य वन्दे।

गोपी। अपि कुशलं भगवतः।

मुकु। इहैवागताः प्रभुचरणाः।

गोपी। सानन्दम्। किं वदसि। क क। इति पुनस्तमालिङ्गति।

मुकु। तमादाय प्रत्यावर्त्तते।

गोपी। अग्रतोऽवलोक्य। मुकुन्द कोऽयं यतीन्द्रः।

मुकु। सर्व्वं कथयति।

गोपी। साश्चर्य्यम्।

यः केवलं प्रेमरसस्तदाऽऽसीत्
स एव वैराग्यरसेन मिश्रः।
स्वादस्तथाप्येष दृशोस्तथैव
चित्तस्य नोऽयं मधुराम्लरूपः॥

मुकु। उपसृत्य। भो देव श्रीजगन्नाथदेवेनैव भगवन्तमभ्यागमयितुं प्रतिनिधिरिव प्रहितो गोपीनाथाचार्य्यः।

भगवान्। बहिर्वृत्तिं नाटयन्। क्वासौ क्वासौ।

गोपी। अयमस्मि। इति चरणयोः पतति।

भग। आलिङ्गति।

गोपी। नित्यानन्दं प्रणम्य जगदानन्ददामोदरौ प्रणमति।

मुकु। आचार्य्य कथमबाधं यथाकाममेव भगवतो जगन्नाथस्य दर्शनं सम्पद्यते।

गोपी। सार्व्वभौमस्य तथा सौभाग्योदयश्चेद्भवति।

सर्व्वे। तर्हि विज्ञाप्यतां स्वयमेव देवः।

गोपी। स्वामिन् विना सार्व्वभौमसम्भाषणं श्रीजगन्नाथदर्शनं न सुलभमिति मन्यामहे भगवतो वा कीदृगिच्छा।

भग। भवदिच्छैव ममेच्छा।

गोपी। तर्हि फलितं सार्व्वभौमस्य सुकृतद्रुमेण। देव तदित इतः पदानि धारयन्तु भगवन्तः।

भग। आदिश मार्गम्।

गोपी। इत इतः। इति सर्व्वे परिक्रामन्ति।

ततः प्रविशति अध्यापयन् सशिष्यः सार्व्वभौमभट्टाचार्य्यः।

भट्टाचार्य्यः। कः कोऽत्र भो जानीत श्रीजगन्नाथस्य मध्याह्नधूपः संवृत्तो न वेति।

गोपी। अयमयं भट्टाचार्य्यस्याध्यापनोपरमः संवृत्तः। सम्प्रत्यभ्यन्तरं यास्यति तत्त्वरितमेवोपसर्पामि। इति विचार्य्य। भगवन्निहैव क्षणं विश्रमितुमर्हति यावदहमागच्छामि। इति सत्वरमुपसृत्य। भट्टाचार्य्य कोऽपि महानुभावः सम्प्राप्तोऽस्ति तदभिगम्य समानीयतामिति।

सार्व्व। कियद्दूरेऽसौ।

गोपी। अभ्यर्ण एव।

सार्व्व। उत्थायाभिगच्छति। शिष्याश्चानुगच्छन्ति।

नित्या। अहो अयमयं भट्टाचार्य्यः सार्व्वभौमः। यदयं स्वयमागतस्तर्हि साधीयानेव भवति।

भट्टा। उपसृत्य। नमो नारायणाय। इति प्रणमति।

भग। कृष्णे रतिः कृष्णे मतिः।

सार्व्व। स्वगतम्। अहो अपूर्व्वमिदमाशंसनं तर्ह्ययं पूर्व्वाश्रमे वैष्णवो वा भविष्यति।

शिष्याः स्मयन्ते।

सार्व्व। स्वामिन्नितः। इति भगवन्तमादाय यथास्थानमुपवेश्य स्वयमप्युपविशति। सर्व्वे उपवेशं नाटयन्ति।

सार्व्व। आचार्य्य अयं पूर्व्वाश्रमे गौडीयो वा।

गोपी। भट्टाचार्य्य पूर्व्वाश्रमे नवद्वीपवर्त्तिनो नीलाम्बरचक्रवर्त्तिनो दौहित्रो जगन्नाथमिश्रपुरन्दरस्य तनुजः।

सार्व्व। सस्नेहादरम्। अहो नीलाम्बरचक्रवर्त्तिनो हि मत्ताततीर्थाः। मिश्रपुरन्दरस्तु मत्तातपादानामतिमान्यः।

गोपी। श्रीजगन्नाथदर्शनसौलभ्यमेषामुद्देश्यमस्ति।

सार्व्व। सर्व्वथैव तद्भावि। कः कोऽत्र भो आहूयतां चन्दनेश्वरः। प्रविश्य सत्वरम् चन्दनेश्वरो भगवन्तं प्रणम्य पितरं प्रणमति।

सार्व्व। चन्दनेश्वर श्रीपादस्यानुपदं गच्छ। यथाऽयं सुखेन प्रत्यहं यथाकामं श्रीमुखं पश्यति तथा सर्व्वैरेव विधेयं यथा केनापि बाधा न क्रियते। अयं मदीयो मान्यतम इति।

चन्द। यथाऽऽज्ञापयन्ति श्रीचरणाः।

सार्व्व। स्वामिन्नत्थीयताम्।

भग। नित्यानन्दादिभिः सह चन्दनेश्वरमादाय निष्क्रान्तः।

सार्व्व। आचार्य्य स्थीयताम्।

गोपी। अर्द्धनिष्क्रान्त एव मुकुन्दं हस्तेनाकृष्य प्रत्यावृत्य उपविशति।

सार्व्व। आचार्य्य अमुमालोक्य स्नेहशोकतारल्यं जातम्।

नीलाम्बरचक्रवर्त्तिसम्बन्धादयमतीव स्नेहास्पदं नः।

अल्पीयसि वयसि तुरीयाश्रमो गृहीतः कथमनेन॥

कस्तावदस्य महावाक्योपदेष्टा।

गोपी। केशवभारती।

सार्व्व। हन्त कथमयं भारतीसम्प्रदाये प्रवर्त्तितवान् वा।

गोपी। नास्य तथा वाह्यापेक्षा केवलं त्याग एवादरः।

सार्व्व। किं तावत् वाह्यम्।

गोपी। सम्प्रदायोत्कर्षादि।

सार्व्व। समीचीनं नोच्यते। आश्रमौज्ज्वल्यं न वाह्यम्।

गोपी। केवलं गौरवायेति वाह्यमेतत्।

सार्व्व। गौरवेण किमपराद्धं तन्मयैवं भण्यते भद्रतर-साम्प्रदायिकभिक्षोः पुनर्योगपट्टं ग्राहयित्वा वेदान्तश्रवणेनायं संस्करणीयः।

गोपी। सासूयमिव। भट्टाचार्य्य न ज्ञायतेऽस्य महिमा भवद्भिः। मया तु यद्यद्दृष्टमस्ति तेनानुमितमयमीश्वर एव इति।

मकु। स्वगतम्। साधु भो आचार्य्य साधु। दग्धं मे जीवितं निर्व्वापितमस्ति भवता।

शिष्याः। केन प्रमाणेन ईश्वरोऽयमिति ज्ञातं भवता।

गोपी। भगवदनुग्रहजन्यज्ञानविशेषेण ह्यलौकिकेन प्रमाणेन। भगवत्तत्त्वं लौकिकेन प्रमाणेन प्रमातुं न शक्यते अलौकिकत्वात्।

शिष्याः। नायं शास्त्रार्थः। अनुमानेन न कथमीश्वरः साध्यते।

गोपी। ईश्वरस्तेन साध्यतां नाम। न खलु तत्तत्त्वं साधयितुं शक्यते। तत्तु तदनुग्रहजन्यज्ञानेनैव तस्य प्रमाकरणत्वात्।

शिष्याः। क्व दृष्टं तस्य प्रमाकरणत्वम्।

गोपी। पुराणवाक्य एव।

शिष्याः। पठ्यताम्।

गोपी। अथापि ते देव पदाम्बुजद्वय-
प्रसादलेशानुगृहीत एव हि।
जानाति तत्त्वं भगवन्महिम्नो-
न चान्य एकोऽपि चिरं विचिन्वन्॥

विचिन्वन् इति शास्त्रादिवर्त्मसु।

शिष्याः। तर्हि शास्त्रैः किं तदनुग्रहो न भवति।

गोपी। अथ किम्। कथमन्यथा विचिन्वन्नित्युक्तम्।

शिष्याः। विहस्य तत्कथमेतावन्ति दिनानि वृथैव भवता पठितम्।

गोपी। शिल्पविशेष एव तत्।

सार्व्व। विहस्य। भवति तदनुग्रहोऽस्ति जातस्तत्तत्त्वन्तु भवता ज्ञायत एव किञ्चित् कथ्यताम्।

गोपी। तत्कथाविषयो न भवति अनुभववेद्यमेव भवति चेदस्यानुग्रहस्त्वयि तदा भवतैवानुभाव्यम्।

शिष्याः। स्वगतम्। कथमयमसाध्वसमेवानेन सह व्यधिकरणं किञ्चिज्जल्पति अथ वा आवृत्तोऽयमिति किञ्चित् परिहसतीव।

गोपी। भट्टाचार्य्य भवता यदेनमीश्वरमुद्दिश्य किञ्चिद्व्यधिकरणमुक्तं तेनासहिष्णुतया किञ्चिन्मयोक्तं न तावदतिगभीरैर्भवद्भिरेवमभिलपितुं युज्यते। अथ वा नैष वो दोषः।

यच्छक्तयो वदतां वादिनां वै
विवादसम्वादभुवो भवन्ति।
कुर्व्वन्ति चैषां मुहुरात्ममोहं
तस्मै नमोऽनन्तगुणाय भूम्ने॥

सार्व्व। विहस्य ज्ञातं वैष्णवोऽसि।

गोपी। सप्रश्रयम्। यद्यस्य कृपा स्यात्तदा त्वमपि भविष्यसि।

सार्व्व। अलं पल्लवेन। भवान् गच्छतु भगवद्दर्शनानन्तरं मातृस्वसुरावासे तवेश्वरः सगणो वास्यतां मन्नाम्ना भगवत्प्रसादेन निमन्त्रयितव्यश्च।

गोपी। यथाऽऽज्ञापयसि।

सार्व्व। तदहमपि माध्यन्दिनकर्म्मणे प्रयामि। इति सशिष्यो निष्क्रान्तः।

गोपी। मुकुन्द एह्येहि। इति परिक्रम्य। भो मुकुन्द भट्टाचार्य्यवाग्वज्रमद्यापि मे हृदयं क्रन्तति यदि परमकारुणिकेन भगवता तदुद्ध्रियते तदैव मे मनो निर्व्वाति।

मुकु। किमशक्यं तस्य भगवतः।

गोपी। तदेहि श्रीजगन्नाथदर्शनार्थं प्रयातं भगवन्तमनुसराव। इति निष्क्रामतः। नेपथ्ये। अहो अद्भुतम्।

तुङ्गभृङ्गयुवसङ्गतफुल्ल-
पुण्डरीकवरलोचनलक्ष्मि।
हिङ्गुलस्नपितशुक्लचतुर्थी-
शीतदीधितिकलाधरविम्बम्॥

अपि च। चारुकारुणिकमारुचिराङ्गं
ब्रह्मदारुमयमेतदुदेति।
आहतोऽस्य रुचिकन्दलवृन्दै-
रिन्द्रनीलमणिदर्पणदर्पः॥

गोपी। अये श्रीमुखदर्शनं जातमिव यदमी नित्यानन्दादयो मिथो निर्व्वर्णयन्ति। पुनस्तत्रैव।

अन्योन्येक्षणरागरञ्जिततया द्वौ निर्निमेषेक्षणौ
राजेते जगतः पती उभयतो निस्पन्दसर्व्वाङ्गकौ।
दारुब्रह्मणि लीयते किमु नरब्रह्मैतदाहो नर-
ब्रह्मण्येव हि लीयते शिव शिव ब्रह्मैव वा दारवम्॥

गोपी। भद्रं भो भद्रम् एक एव भगवानास्वाद्यास्वादकभा-वेन द्विधाभूत इव। पुनस्तत्रैव।

द्वावेव पूर्णकरुणौ जगदुद्दिधीर्षू
द्वावेव लोचनपथं जगतो जिहानौ।
अन्तःस्थनन्दतनयोऽन्तरवर्त्तिदारु-
ब्रह्मेति केवलमियानुभयोर्हि भेदः॥

गोपी। साधु भो नित्यानन्ददेव साधु तत्त्वज्ञोऽसि भगवतो गौरचन्द्रस्य। तन्मन्ये भगवद्दर्शनं कृत्वा प्रत्यावर्त्तन्ते एव सर्व्वे। तदावामपि भगवन्तं श्रीजगन्नाथं दृष्ट्वा त्वरितमेव पुनरेतावनुसराव। इति निष्क्रान्तौ।

ततः प्रविशति पुण्डरीकाक्षदर्शनानन्दनिःस्पन्दो भगवान् नित्यानन्दादयश्चन्दनेश्वरश्च।

चन्द। हंहो महान्तः सम्पन्नं यथासुखमेव भवतां भगवद्दर्शनम्।

नित्यानन्दादयः। यथामनोरथमेव सुसम्पन्नम्।

चन्द। स्वगतम्। अहो कथमसौ विलम्बते गोपीनाथाचार्य्यः। किमिदानीमहं करोमि न किमपि निगदितं तातचरणैः। मन्ये तस्मै एव सर्व्वं कथितमास्ते तत्कथमयमद्यापि नायातः। इति परितोऽवलोकयति।

ततः प्रविशति त्वरां नाटयन् मुकुन्देन सहाचार्य्यः।

आचा। एहि मुकुन्द एतेऽमी गच्छन्ति तदुभयमेव संवृत्तम्। नीलाचलचन्द्रोऽपि दृष्टो हेमाचलगौरोऽपि दृश्यते। इति

सत्वरमुपसृत्य। चन्दनेश्वर त्वमितो गृहं गच्छ अतः परं मयैव सर्व्वं समाधास्यते।

चन्द। यथाह भवान्। इति भगवन्तं प्रणम्य निष्क्रान्तः।

गोपी। उपसृत्य देवं प्रणमति।

दामो। भगवन्नयमाचार्य्यः प्रणमति।

भगवान्। वहिर्द्दष्टिं नाटयित्वा। एह्येहि। इति तमालिङ्गति।

गोपी। देव भट्टाचार्य्येण सानुचर एव निमन्त्रितोऽसि। तदित एवागच्छन्तु। इति पूर्व्वोद्दिष्टाऽऽवासं प्रापय्य भगवतः पादधावनादिकं दन्तधावनावसानं सकलमेव परिचर्यां कृत्वा भिक्षोत्तरं सुखनिविष्टे सति तस्मिन् सवैमनस्यम्। देव भट्टाचार्य्येणान्यदपि निमन्त्रितमस्ति।

भग। किं तत्।

गोपी। साम्प्रदायिकसन्न्यासिनः शकासाद्योगपट्टं ग्राहयित्वा वेदान्तं श्रावयिष्यति।

भग। अनुगृहीतोऽस्मि तेन भवत्वेवं करिष्यामि।

मुकु। देव आचार्य्येण तदवधि तेन वाक्स्फुलिङ्गनिकरेण दन्दह्यमानहृदयेन स्थीयते महाप्रसादोऽपि नाद्य स्वीकृतोऽस्ति।

भग। आचार्य्य बालकोऽस्मि। यदयं मां प्रति स्निह्यति तेनैवेदमवादीत्। कथमत्र दूयसे।

गोपी। भगवन् श्रीचरणैरिदं मे शल्यं हृदयादुद्ध्रियते चेत्तदा जीवितं धारयिष्ये। इति रोदिति।

भग। पुण्डरीकाक्षस्ते मनोरथं पूरयिष्यति।

दामो। भवताऽयं निमन्त्यताम्।

दामो। यथाऽऽज्ञापयसि। इति तमादाय निष्क्रामति।

भग। जगदानन्द भगवतः पुण्डरीकाक्षस्य रजनीशेष-शयनोत्थापनलीला यथा दृश्यते तथा यतनीयम्। प्रविश्याचार्य्येण सह।

दामो। भगवन् यथाऽऽज्ञम्। महाप्रसादेन भोजितोऽय-मत्रैव शिशयिषुरस्ति।

भग। साधु साधु। इति सर्व्वे प्रियसङ्कथया मुहूर्त्तान् गमयन्ति। नेपथ्ये पाणिशङ्खध्वनिः।

सर्व्वे। सचमत्कारम्। अहो यामशेषेव त्रियामा। यदयम्

पूर्व्वाः शयनोत्थिताविव चलत्सर्व्वाङ्गभूषाक्वणः
किं वा देवकुलस्य वारणपतेरुद्बृंहितं बृंहितम्।
आयातेति कृपानिधेः किमु कृपादेव्या जगत्प्राणिना-
माह्वानध्वनिरभ्युपैति मधुरः श्रीपाणिशङ्खध्वनिः॥

भग। तदहो अवितथमेव गतेयं रजनी।

आचा। एहि सहैव पुण्डरीकाक्षस्य शयनोत्थानावकाशं पश्याम।

गोपी। यथाऽऽज्ञापयसि। इति तत्समयोचितं कर्म्म कर्त्तुं निष्क्रान्तः। प्रविश्य सत्वरः

कश्चित्। कः कोऽत्र भो गोपीनाथाचार्य्यः क्व वर्त्तते वृत्तं तज्जानासि। आकाशे लक्ष्यं बद्ध्वा। किं ब्रवीषि। आचार्य्यः श्री-

कृष्णचैतन्यदेवस्य निकटे। इति। भवतु तत्रैव यामि। इति कतिचित्पदानि गत्वा पुरोऽवलोक्य। अहो अयमेष आचार्य्यो भविष्यति। इत्युपसर्पति। ततः प्रविशत्याचार्य्यः।

आचा। अहो जातप्रायोऽयं समयः शयनोत्थानस्य तदहं त्वरयामि भगवन्तम्।

पुरुषः। उपसृत्य। आचार्य्य भट्टाचार्य्यो विज्ञापयति श्री-कृष्णचैतन्यदेवो यथा भगवतो जगन्नाथदेवस्य शय्योत्थानं पश्यति तथा त्वयैव सङ्गे कृत्वा यतनीयम्।

गोपी। यथाऽऽज्ञं करवाणि। इति श्रीकृष्णचैतन्यदेवं त्वरयि-तुमुपसर्पति। ततः प्रविशति सानुचरो देवः।

देवः। मुकुन्द विलोक्यतां को विलम्ब आचार्य्यस्य।

गोपी। एषोऽहं भगवन्तं प्रतीक्षमाणो वर्त्ते।

भग। तदग्रे गम्यताम्।

आचा। तथाकृत्वा। भगवन्नित इतः। इति प्रवेशं नाटयित्वा जगन्मोहनमासाद्य। देव पश्य।

तत्कालीनकवाटवाटनिविडोद्घाटे विनिष्क्रामता
गर्भागारगरिष्ठसौरभभरेणामोदमभ्युद्वमन्।
निद्राभङ्गभृतालसो मुखमिव व्यादाय शेषे ऽनिशो
जृम्भारम्भमिवातनोति स इयं प्रासाद एष प्रभोः॥

अपि च। देव आश्चर्य्यमाश्चर्य्यम्।

दीपाभावघनान्धकारगहने गम्भीरगम्भीरिका
कुक्षौ तल्पत उत्थितस्य जयतो लक्ष्मीपतेर्लोचने।

कालिन्दीसलिलोदरे विजयिनो वातेन घूर्णायिते
प्रोन्मत्तभ्रमरावलीढजठरे सत्पुण्डरीके इव ॥

भग। गरुडस्तम्भस्य पश्चादवस्थाय सस्पृहं पश्यति।

मुकु। आचार्य्य पश्य पश्य।

क्षणात् प्रदीपावलयः समन्ता-
द्गम्भीरिकायाः कुहरे ज्वलन्त्यः ।
विलोचनोत्सारिभिरस्रपूरै-
र्न्यग्भूतभासो लिखिता इवाऽऽसन् ॥

गोपी। पश्य पश्य।

अनुवदनप्रक्षालनमभ्यङ्गस्नानभूषणाद्यमथ।
अनु बालभोगलीला हरिवल्लभभोग एष तत्पश्चात् ॥

दृश्यतामधुना प्रातर्धूपाख्यः पूजाविशेषः।

भग। आनन्दस्तिमित एव सपुलकाङ्गं पश्यत्येव।

आचा। भो भो जगदानन्दादयः पश्यत पश्यत। प्रातर्धूपस्य प्रसादान्नं कियदञ्जलौ कृत्वा कश्चित् मालाञ्चकरयोः कृत्वा कश्चिद्युगपदेव समागच्छतः किमेतौ। महाप्रभवे श्रीकृष्णचैतन्याय दास्यतः। केन वा प्रेरितावेतौ। अथ वा श्रीजगन्नाथेनैव। प्रविश्य पार्षदौ श्रीकृष्णचैतन्यसमीपमुपसर्पतः।

भग। उपसृत्य मूर्द्धानमवनमयति। एकः मालां प्रयच्छति।

भग। बहिर्वासोऽञ्चलं प्रसारयति।

अपरः। प्रसादान्नं प्रयच्छति।

भग । अञ्जले कृत्वा श्रीजगन्नाथं प्रणम्यैव सिंहवत्त्वरितगतिर्निष्क्रान्तः ।

सर्व्वे । अहो किमिदम् । कथमकस्मादेव देवो निष्क्रान्तः । तदागच्छत क्वायं गच्छति विलोकयाम । इति पुरान्निष्क्रम्य कतिचित्पदानि गत्वा पुरतो विलोक्य । अहो भगवान् स्वावासवर्त्म त्यक्तवान् ।

गोपी । निभाल्य । अये दामोदरादयः सार्व्वभौमालयं प्रति देवः प्रस्थितवान् । तत्फलितं भट्टाचार्य्यस्य सुकृतद्रुमेण । तद्दामोदरजगदानन्दौ भगवत्सङ्गे प्रयातं मुकुन्देन सार्द्धमहमासन्नस्थल एव तिष्ठामि ।

उभौ । यथारुचितं भवते । इति निष्क्रान्तौ ।

गोपी । एहि मुकुन्द सार्व्वभौमस्य द्वितीयकक्षायां तिष्ठाव । इति तथा कृत्वा पुरोऽवलोक्य । अये एतौ सार्व्वभौमभृत्यौ सविस्मयमितएवोपसर्पतः । तदपवार्य्य तिष्ठाव । इति द्वारोपान्ते तिष्ठतः । ततः प्रविशतो भृत्यौ ।

एकः । अले एसे सण्णासी कंपि मोहणमन्तं जाणादि । जदो भट्टाचालिए इमिणा गहग्गत्थे विअ किदे (१) ।

अन्यः । अले किलिसे किदे (२) ।

प्रथमः । अले ण आणासि सेज्जाए अणुत्थिदेज्जेव भट्टा-

१ अरे एष सन्न्यासी किमपि मोहनमन्त्रं जानाति । यतो भट्टाचार्य्योऽनेन ग्रहग्रस्तइव कृतः ।

२ अरे कीदृशः कृतः ।

चालिए एसे अम्हादो सअणघरदुआले गदे तदो वडुएण कहिअं। भट्टाचालिअ भट्टाचालिअ उत्थेहि उत्थेहि से सण्णासी आअदोत्ति। तदो धसमसिअ भट्टाचालिए उत्थिअ इमस्स चलणे पडिए। तदो इमिणा जहस्साहस्स पसाअभत्तं हत्थे कदुअ भुञ्जत्ति गदिदवन्तो। तदो अम्हाणं ईसले उम्मत्ते विअ अकिअ-विचाले तक्खणमेत्तेण तं भत्तं गिलिअवन्ते अकिद-सिणाणेज्जेव अकिअ-मुह-पक्खालणेज्जेव। गिलिऊण उम्मत्ते विअ कण्टइद-सअलङ्गे णअण-जल-त्थिमिद-वसणे घग्घल-कण्ठसद्दे अवम्हाल-लोअ-विवसे विअ भविअ महीदले लुण्ठदि किं हुविस्सदि ण आणेम्ह (१)।

गोपी। आकर्ण्य। मुकुन्द श्रुतम्।

मुकु। तवानुतापेनैव देवेनेदमध्यवसितम्।

म्हत्यौ। आअच्छ अम्हे गोपीणाहाचालिअं मग्गेम (२)।

इति निष्क्रान्तौ।

---

१ अरे न जानासि शय्यातोऽनुत्थिते एव भट्टाचार्ये सति एषोऽकस्मात् शयनगृहद्वारे गतस्ततो वटुकेन कथितम्। भट्टाचार्य भट्टाचार्य उत्तिष्ठ उत्तिष्ठ स सन्न्यासी आगत इति। तदा धस्मसितिशब्दं कृत्वा भट्टाचार्य उत्थाय अस्य चरणे पतितः। ततोऽनेन जगन्नाथस्य प्रसादभक्तं हस्ते कृत्वा भुङ्क्ष्वेति गदितवान्। तदा अस्माकमीश उन्मत्त इव अकृतविचारस्तत्क्षणमात्रेण तद्भक्तं गिलितवान् अकृतस्नान एव अकृतमुखप्रक्षालन एव। गिलित्वा उन्मत्त इव कण्टकितसर्वाङ्गो नयनजलस्तिमितसर्वाङ्गो घर्घर-कण्ठशब्दोऽपस्मार-रोग-विवश इव भूत्वा महीतले लुठति किं भविष्यति न जानीमः।

२ आगच्छ आवां गोपीनाथाचार्यं मार्गयाव।

गोपी। भद्रं भो भद्रम्। यदाभ्यामहं न दृष्टः। तदितः स्थित्वा दामोदरजगदानन्दौ प्रतिपालयाव। इति तथा कुरुतः।

ततः प्रविशति विस्मयं नाटयन् दामोदरः।

दामो।

विना वारीं बद्धो वनमदकरीन्द्रो भगवता
विना सेकं स्वेषां शमित इव हृत्तापदहनः।
यदृच्छायोगेन व्यरचि यदिदं पण्डितपतेः
कठोरं वज्रादप्यमृतमिव चेतोऽस्य सरसम्॥

गोपी। उपसृत्य। दामोदर किन्तत्।

दामो। अस्ति रहस्यं कथयिष्यामः। किन्तु मया भवदर्थमित आगतम्। द्वारान्तरेण निष्क्रम्य लब्धाऽऽवासं भगवन्तमनुसराम। इति त्रयः कतिचित्पदानि परिक्रामन्ति।

दामो। विना वारीमित्यादि पठित्वा सर्व्वमेव कथयति।

गोपी। श्रुतमेव सर्व्वं मिथः कथयतोस्तद्भृत्ययोः प्रमुखतः।

दामो। तवैव प्रसादादिदं तस्य सौभाग्यं तदेहि शीघ्रं भगवत्समीपमनुसराम। यदयं भट्टाचार्य्योऽपि कृताह्निकस्त्वागतप्राय एव इदानीमस्याश्रयो गम्यः। तदिदानीं वाक्प्रयोगएवनाभूत्। इति परिक्रामन्ति।

ततः प्रविशति कृतासनपरिग्रहो भगवान् नित्यानन्दो जगदानन्दश्च।

भग। जगदानन्द क्वासौ गोपीनाथाचार्य्यः।

जगदा। अयमयं दामोदरमुकुन्दाभ्यां त्वरमाण आचार्य्यः।

गोपी। उपसृत्य। जयति जयति परमकारुणिकः।

जगदा। अहो कथमयमश्रुतपूर्व्वस्ते व्याहारविलासः।

गोपी। स खलु भवतामेव वेद्यः। इत्युपसृत्य प्रणमति।

नेपथ्ये। स्वामिन् नायं पन्थाः श्रीजगन्नाथालयोपसर्पणाय।

भगवान्। आकर्ण्य आकर्ण्य। ज्ञायतामाचार्य्य किमेतत्।

गोपी। नेपथ्याभिमुखमवलोक्य। ज्ञातं ज्ञातं अयमयं भट्टाचार्य्यः। श्रीजगन्नाथमदृष्ट्वैव भगवच्चरणोपसर्पणार्थमागच्छति।

दामो। पुरैव ज्ञातमस्ति। इति सर्व्वे तन्मुखमीक्षमाणास्तिष्ठन्ति।

ततः प्रविशति विस्मयोत्फुल्लमनाः सार्व्वभौमः।

सार्व्व। स्वगतम्। अहो अवितथमेवाह गोपीनाथाचार्य्यः। अस्माकमपि चेतो यदीदृशमजनि तदयमीश्वर एव। इति सोत्कण्ठं परिक्रम्य। अहो इदमस्मन्मातृष्वसुः पुरं तद्यावत् प्रविशामि। इति प्रवेशं नाटयति।

आचा। उत्थायाभिगच्छति।

सार्व्व। अग्रेऽवलोक्य। आचार्य्य किं कुर्व्वन्ति स्वामिनः।

आचा। इत इत आगच्छन्तु भवन्तः।

सार्व्व। उपसृत्य भगवन्तं दण्डवत्प्रणम्याञ्जलिं बद्ध्वा।

नानालीलारसवशतया कुर्व्वतो लोकलीलां
साक्षात्कारेऽपि च भगवतो नैव तत्तत्त्वबोधः।
ज्ञातुं शक्नोत्यहह न पुमान् दर्शनात् स्पर्शरत्नं
यावत् स्पर्शाज्जनयतितरां लोहमात्रं न हेम॥

अपिच। स्वजनहृदयसद्मा नाथ पद्माधिनाथो
भुवि चरसि यतीन्द्रच्छद्मना पद्मनाभः।
कथमिह पशुकल्पास्त्वामनल्पानुभावं
प्रकटमनुभवामो हन्त वामो विधिर्नः॥

भगवान्। कर्णौ पिधाय। भट्टाचार्य्यं भवद्वात्सल्यपात्रमेवास्मि तत्किमिदमुच्यते। स्वगतम्। अहो इदानीमस्याशयः परीक्षणीयः प्रकाशम्। हंहो महाशय निरुच्यतां कस्तावत् शास्त्रार्थः।

भट्टा। अञ्जलिं बद्धा। भगवन्।

शास्त्रं नानामतमपि तथा कल्पितं स्वस्वरुच्या
नोचेत्तेषां कथमिव मिथः खण्डने पण्डितत्वम्।
तत्रोद्देश्यं किमपि परमं भक्तियोगो मुरारे-
र्निष्कामो यः स हि भगवतोऽनुग्रहेणैव लभ्यः॥

अपि च। वेदाः पुराणानि च भारतञ्च
तन्त्राणि मन्त्रा अपि सर्व्व एव।
ब्रह्मैव वस्तु प्रतिपादयन्ति
तत्त्वेऽस्य विश्राम्यति सर्व्व एव॥

यतः। यस्मिन् वृहत्वादथवृंहणात्वा-
न्मुख्यार्थवत्वे सविशेषतायाम्।
ये निर्विशेषत्वमुदीरयन्ति
तेनैव तत्साधयितुं समर्थाः॥

तथा हि। हयशीर्षपञ्चरात्रम्।
या या श्रुतिर्जल्पति निर्विशेषं

सा साऽभिधत्ते सविशेषमेव ।
विचारयोगे सति हन्त तासां
प्रायो बलीयः सविशेषमेव ॥

तथा हि । "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देनैव जातानि जीवन्ति आनन्दं प्रयन्ति अभिसंविशन्ति" इत्यादिकया श्रुत्या अपादानकरणकर्म्मादिकारकत्वेन विशेषवत्त्वापत्तेः । एवं "यतो वा इमानि भूतानि जायन्ते" इत्यादिकया "स ऐक्ष्यत" इत्यादौ सोऽकामयत" इत्यादौ च ईक्षणं पर्य्यालोचनं कामः सङ्कल्पः । इत्याभ्यामपि विशेषवत्वान्न तावन्निर्विशेषत्वमुपपन्नं भवति । आयाते च विशेषे रूपस्यापि विशेषादायातत्वं न तु तद्रूपं प्राकृतं ज्योतिश्चरणाभिधानादिति । ज्योतिषोऽप्राकृतत्वं यथा साध्यते तथा तस्य रूपस्यापीति । केवल निर्विशेषत्वे शून्यवादावसरः प्रसज्येत । तेन ब्रह्मशब्दो मुख्यएव मख्यत्वेन भगवान् ब्रह्मेत्यवशिष्टम् । तथा च "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" । स्वपक्षरक्षणाग्रहग्रहिलास्तु मुख्यार्थाभावाभावेऽपि लक्षणया निरूपयितुमशक्यमपि निर्विशेषत्वं ये प्रतिपादयन्ति तेषां दुराग्रहमात्रम् । वस्तुतस्तु ।

आनन्दो द्विविधः प्रोक्तो मूर्त्तामूर्त्तप्रभेदतः ।
अमूर्त्तस्याश्रयो मूर्त्तो मूर्त्तानन्दोऽच्युतो मतः ॥
अमूर्त्तः परमात्मा च ज्ञानरूपश्च निर्गुणः ।
स्वरूपश्च कूटस्थो ब्रह्म चेति सतां मतम् ॥
अमूर्त्तमूर्त्तयोर्भेदो नास्ति तत्त्वविचारतः ।

भेदस्तु कल्पितो वेदैर्मणितत्तेजसोरिव ॥

इति हयशीर्षपञ्चरात्रम्। तथा कपिलपञ्चरात्रेऽपि अगस्त्यं प्रति कपिलवाक्यम्।

द्वे ब्रह्मणी तु विज्ञेये मूर्त्तञ्चामूर्त्तमेव च।
मूर्त्तामूर्त्तस्वभावोऽयं ध्येयो नारायणो विभुः ॥

इति पाञ्चरात्रिकमतमेव निर्म्मत्सरम्। केवलनिर्विशेषब्रह्मवादिनस्तु अमूर्त्तानन्दमेव ब्रह्मेति निरूपयन्तः स्ववासनापारुष्यमेव प्रकटयन्ति नतु ते निर्विशेषत्वं स्थापयितुं शक्नुवन्ति। पाञ्चरात्रिकमतस्वीकारे तु "आनन्दं ब्रह्मणो रूपम्" एकमेवाद्वितीयं ब्रह्म" इत्यादि च सिध्यति। रूपत्वेन मूर्त्तत्वं मणितत्तेजसोरिवेत्युक्तेनाद्वितीयत्वं तेन भगवानेव ब्रह्मेति सर्व्वशास्त्रमतम्। वासना वैशिष्ट्यादेव मूर्त्तानन्दे भगवति लीलाविग्रहमिति मन्वाना अमूर्त्तानन्दमेव ब्रह्मेति केचिदाहुः। पाञ्चरात्रिकास्त्वविगीतशिष्टा भगवदुपासकत्वात् तेन तदाचरितेनैव वेदार्था अनुमीयन्ते। तथा च।

शाखाः सहस्रं निगमद्रुमस्य
प्रत्यक्षसिद्धा न समग्र एषः।
पुराणवाक्यैरविगीतशिष्टा-
चारैश्च तस्यावयवोऽनुमेयः ॥

तत्र पुराणवचनानि। यथा

यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनमित्यादि।

पूर्णं रूपवत्त्वेन निर्विशेषन्तु ब्रह्म अपूर्णं नीरूपमित्यर्थः।

शिष्टास्तु सात्वतास्तेषां मतम्। "वासुदेवपरा देवता वासुदेवपरात्परमात्मनः सङ्कर्षणो जीव इत्यादि। जीवयति जीवं करोतीति जीवः। न तु स्वयं जीवः। स चात्मा शब्दब्रह्म परब्रह्म। ममोभे शाश्वती तनू इति तदुक्तेः। तस्मादेव जीवसृष्टिरित्यर्थः। अतो मूर्त्तानन्द एव कृष्ण इति शास्त्रार्थः।

भगवान्। साधु साधु तदिदानीं पुण्डरीकाक्षदर्शनाय साधय।

भट्टा। यथाऽऽज्ञापयति देवः। इति दामोदर-जगदानन्दौ गृहीत्वा निष्क्रान्तः।

मुकु। कथमयमेतौ गृहीत्वा गतः।

गोपी। अस्ति निगूढम्। किन्तु देव स एवायं भट्टाचार्य्यः।

भगवान्। महाभागवतस्य भवतः सङ्गादन्यथैव जातः।

गोपी। विहस्य। एवमेव।

ततः प्रविशतोऽपटीक्षेपेण दामोदर-जगदानन्दौ।

दामोदर-जगदानन्दौ। देव भट्टाचार्य्येण पद्यद्वयं भैक्ष्यमन्नञ्च भगवज्जगन्नाथभुक्तावशिष्टं प्रहितमस्ति।

भगवान्। अनुगृहीतोऽस्मि।

मुकु। पद्यद्वयं पश्यामि। इति तत्करात् पत्रिकामादाय स्वगतं वाचयति।

वैराग्यविद्यानिजभक्तियोग-
शिक्षार्थमेकः पुरुषः पुराणः।
श्रीकृष्णचैतन्यशरीरधारी

कृपाम्बुधिर्यस्तमहं प्रपद्ये ॥
कालान्नष्टं भक्तियोगं निजं यः
प्रादुष्कर्त्तुं कृष्णचैतन्यनामा।
आविर्भूतस्तस्य पादारविन्दे
गाढं गाढं लीयतां चित्तभृङ्गः ॥

इति वाचयित्वा भित्तौ विलिख्य देवहस्ते ददाति।

भगवान्। आलोक्य विदारयति।

गोपी। देव मध्याह्नो जातस्तदुत्तरकरणीयाय सज्जीभवन्तु श्रीचरणाः।

सर्व्वे। एवमेव। इति निष्क्रान्ताः।

सार्व्वभौमानुग्रहो नाम षष्ठोऽङ्कः ॥

---

## सप्तमाङ्कः।

ततः प्रविशति सार्व्वभौमः।

सार्व्व। अहो कथमद्यासमय एव गजपतिना समाहूतोऽस्मि तदुचितमुपसर्पितुम्। इत्युपसर्पति।

ततः प्रविशति राजा अभितश्च परीवाराः।

राजा। कः कोऽत्र भोः समाहूयतां भट्टाचार्य्यः। उपसृत्य

भट्टा। एषोऽहमनाह्वानेनैवागतः।

राजा। प्रणम्य। इदमासनमास्यताम्।

भट्टा। आशिषं प्रयुज्यासनमध्यास्ते।

राजा। भट्टाचार्य्य श्रुतं मया कोऽपि महाप्रभावः परमकारुणिको यतीन्द्रः सम्प्रति गौडादागतोऽस्ति।

भट्टा। अथ किम्।

राजा। कथं मया तस्य चरणवन्दनं क्रियते।

भट्टा। इदंत्वतिदुर्घटम्। विरलप्रचाराणां तेषां निष्किञ्चनेनैव दर्शनं लभ्यते। तत्रापि दिनकतिपयान्यद्य दक्षिणस्यां दिशि चलिताः सन्ति।

राजा। किमिति जगन्नाथमहाप्रभोः समीपं विहाय चलितवन्तः।

भट्टा। "तीर्थीकुर्व्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता" इति सामान्यानामेव महतामयं निसर्गः। अयन्तु भगवानेव स्वयम्।

राजा। सविस्मयम्। भट्टाचार्य्य भवन्तश्चेदिदं ब्रुवन्ति तत्सत्यमेवैतत्। तदा किमिति यत्नपुरस्सरं भवताऽत्र नारक्षि।

भट्टा। महाराज।

ब्रह्मादयो लोकपाला यद्भ्रूभङ्गतरङ्गिणः।
विना स्वकरुणादेवीं पारतन्त्र्यं न सोऽर्हति॥

तथाऽपि। कति न विहितं स्तोत्रं काकुः कतीह न कल्पिता
कति न रचितं प्राणत्यागादिकं भयदर्शनम्।
कति न रुदितं धृत्वा पादौ तथाऽपि स जग्मिवान्
प्रकृतिमहतां तुल्यौ स्यातामनुग्रहनिग्रहौ॥

राजा। सोत्कण्ठम् पुनरत्राऽऽगमिष्यन्ति।

भट्टा। अथ किम्। सङ्गिनस्त्वत्र वर्त्तन्ते।

राजा। कथमेकाकी चलितः।

भट्टा। तादृशः कथमेकाकी। तथापि मया समीचीना विप्राः सङ्गे नियुक्ताः सन्ति।

राजा। कियद्दूरं तावत्।

भट्टा। गोदावरीं यावत् ते यास्यन्ति भगवांस्तु सेतुबन्धपर्य्यन्तं गमिष्यतीत्यनुमीयते।

राजा। ब्राह्मणास्तावद्दूरं किमु न प्रेषिताः।

भट्टा। तस्याननुमतेः। गोदावरीपर्य्यन्तन्तु रामानन्दानुरोधात्तेषां सङ्गोऽङ्गीकृतः।

राजा। कस्तावत्तस्यानुरोधः।

भट्टा। गन्तव्यमिति निश्चये कृते मयोक्तं गोदावरीतीरे रामानन्दो वर्त्तते सोऽवश्यमेवानुग्राह्यः।

राजा। कथं तस्येदं सौभाग्यम्।

भट्टा। महाराज स खलु सहजवैष्णवो भवति। पूर्व्वमयमस्माकमुपहासपात्रमासीत् सम्प्रति भगवदनुग्रहे जाते तन्महिमज्ञता नो जाता।

राजा। श्रुतोऽस्ति मया त्वयि यादृशस्तस्यानुग्रहो जातः।

भट्टा। भगवत्प्रभावो हि स्वतः प्रकाशी। प्रविश्य

दौवारिकः। भट्टाचार्य्य भवत्प्रेषिता विप्रा गोदावरीतो निवर्त्तिता भवन्तं प्रतीक्षन्ते।

भट्टा। उत्कण्ठते राजा प्रवेश्यन्तामिहैव।

दौवा। यथाऽऽज्ञापयसि। इति पुनस्तानादाय प्रविशति।

भट्टा। अहो आगच्छतागच्छत विप्राः। उपसृत्य राजानमाशीर्भिरभ्यर्च्य सार्व्वभौमं प्रणमन्ति।

राजा। उपविश्यामूलं कथयत। सर्व्वे उपविशन्ति।

भट्टा। एकतम एव कथयतु।

एकः। इतस्तावदालानननाथदेवमवलोक्य स्तुत्वा महामत्तकरीन्द्रवदनङ्कुश-कुशलगतिकुशलस्वरया रयातिशयैरप्यस्माभिरनुगन्तुं दुःशकः शकलमिव सुमेरोरौदीच्येन प्रबलतरमरुता विभज्य चालितं निरवधि भगवन्नामसङ्कीर्त्तनविकस्वर-स्वरपरभागाधरीकृत-धाराधर-धोरणि-घोरध्वनिरध्वनि वतैकमनोऽभिवीक्ष्यमाणो जनैर्लघीयसा कालेनैव कूर्म्मक्षेत्रमुत्तीर्णवान्।

सार्व्व। एतदभ्यन्तरे भिक्षा नाभूत्।

विप्रः। नाभूदेव।

भट्टा। भवद्भिः किं कृतम्।

विप्रः। अस्माभिस्तु यथालाभं किञ्चिदशित्वा दृश्यमान एवायमनुगम्यते। ततस्तत्रैव कूर्म्मक्षेत्रे कूर्म्मदेवं प्रणम्य स्तुत्वा कूर्म्मनाम्नो द्विजवरस्य गृहमुत्तीर्णवान्। समनन्तरं तेनैव निमन्त्रितः कृतभिक्षश्च यदन्यत् कृतवान् तदप्यद्भुतम्।

भट्टा। किं तत्।

विप्रः। तत्रैव कश्चित् वासुदेवनामा विप्रो गलत्कुष्ठः कुष्ठकृमिनिकर-करम्बित-वङ्कल-रुधिर-वसापूयक्लिन्नसर्व्वाङ्गः कदाचित् पनीपत्यमानान् कृमीनुत्थाप्य तत्रैव निवेशयन्ननुद्विग्नो

भगवन्मग्नमना इव केनाप्यकथितोऽपि स्वयमेव भगवताऽप्रापि। अनन्तरमविलम्बेनैव चिरकाललब्धपरमसुहृदिव गाढतरमायताभ्यां भुजाभ्यामयं तथाविध एव पर्य्यरम्भि समनन्तरं तेन विग्रहेण।

काहं दरिद्रः पापीयान् क कृष्णः श्रीनिकेतनः।
ब्रह्मबन्धुरितिस्माहं बाहुभ्यां परिरम्भितः॥

इति पठन्नेव सद्योऽतिद्योतिप्रकृतसुन्दराङ्गः समजनि। तदनु पुनस्तेनोक्तम्।

भगवन् कथमयमोदृशो मे निग्रहः कृतः। तथाविधेन मया आमयाविना विना दुःखं निरुद्वेगेन स्थितं सम्प्रतिसम्प्रतिपद्यमान-मानतया सर्व्वा एव मनोवृत्तय उत्तिष्ठेयुः। भगवतोक्तम्। ब्रह्मन्नपुनस्ते भगवदनुस्मरणमन्तरेण मनसो वाह्यव्यापारा भविष्यन्ति तदलमुद्वेगेनेति।

राजा। भट्टाचार्य्य सत्यमेवायमोश्वरः। अन्यथा ईदृक्करुणा जीवस्य न घटते। कुष्ठहारित्वन्तु योगीन्द्रस्यापि सङ्गच्छते।

सार्व्व। ततस्ततः।

विप्रः। ततश्च नृसिंहक्षेत्रमुपगम्यागम्यानुभावो भगवन्तं नृसिंहं दृष्ट्वा स्तुत्वा प्रणम्य प्रदक्षिणीकृत्य प्रतस्थे।

काञ्चनाचलमरीचिवीचिभि-
र्गौरयन् किमपि दक्षिणां दिशम्।
दर्शनेन करुणातरङ्गिणा
द्रावयन् जनमनांसि सर्व्वतः॥

अपि च। कृष्ण कृष्ण जय कृष्ण कृष्ण हे
कृष्ण कृष्ण जय कृष्ण कृष्ण हे।
कृष्ण कृष्ण जय कृष्ण कृष्ण हे
कृष्ण कृष्ण जय कृष्ण पाहि नः ॥
इत्थमम्बुदविकस्वरस्वर-
स्निग्धमुग्धवचनामृतद्रवैः।
ह्लादयन् श्रुतिमतां श्रुतिद्वयं
चित्तमप्यपहरन् स जग्मिवान् ॥

सार्व्वं। सत्यमेवास्य तस्यैवमेव प्रकृतिः।

विप्रः। ततो गोदावरीतीरमासाद्य विहितविश्रामे जगज्जनमनोभिरामे निरूपमरूपाभिरामे प्रेमसौभगवति भगवति कनक-केतकोपवन इव परिमलाऽऽमोदितदिग्वलये सकलगुणनिलये स्वयम्प्रकाशिकया ततप्रथया कोऽयं कोऽयमिति कृतसमूहः समूहः शौणिसुराणां तत्र मिलितवान्। निमन्त्रितश्च केनापि। समनन्तरमनन्तरहस्ये सर्व्वतः सञ्चरति जनचयश्रवणकान्ते तदुदन्ते मन्त्राकृष्ट इव ग्रहगृहीत इव विस्मयचमत्कार-विकारविसंष्ठुल इव रामानन्दरायः समुपेयिवान्।

राजा। रामानन्द धन्योऽसि धन्योऽसि। यस्य ते नयनविषयीभूतास्ते श्रीचरणाः।

विप्रः। समनन्तरमागत्यैव चरणकमलपरिसरे सरेरीयमाणाश्रु निपतति स्म स्वयमेव। अये त्वमेव रामानन्दोऽसीति भगवता सानुग्रहमुक्ते अथ किमिति च प्रत्यूचे। तदनु भगव-

ताऽपि सार्व्वभौमानुरोधेन भवदालोकनमभीष्टं ममेति मयाऽत्र क्षणमवस्थितं तत्तुविहितमेव विहितं भवता यत् स्वयमेव समुपसेदे तदुच्यतां किञ्चिदित्यभाणि । ततो यद्यपि रामानन्दो हि कोऽयं किन्नामा किं महिमा किमाशयः किं तत्त्व इति किमपि भगवद्विषयकज्ञानविशेषानभिज्ञस्तथापि चिरकालकलित-सतत-सख्यसुख-सुभगम्भावुक इव निःसाध्वस एव किमपि पठितुमुपचक्रमे ।

मनो यदि न निर्ज्जितं किममुना तपस्यादिना
कथं समनसो जयो यदि न चिन्त्यते माधवः ।
किमस्य च विचिन्तनं यदि न हन्त चेतोद्रवः
स वा कथमहो भवेद्यदि न वासनाक्षालनम् ।

भगवान् । वाढ़मेतत् । का विद्या—

रामा । हरिभक्तिरेव न पुनर्वेदादिनिष्णातता,

भग । कीर्त्तिः का—

रामा । भगवत्परोऽयमिति या ख्यातिर्न दानादिजा ।

भग । का श्रीः—

रामा । तत्प्रियता नवधनजनग्रामादिभूयिष्ठता,

भग । किं दुःखं—

रामा । भगवत्प्रियस्य विरहो नो हृद्व्रणादिव्यथा ॥

भग । भद्रम् । के मुक्ताः ।

रामा । प्रत्यासत्तिर्हरिचरणयोः सानुरागेन रागे
प्रीतिः प्रेमातिशयिनि हरेर्भक्तियोगेन योगे ।

आस्था तस्य प्रणयरभसस्योपदेहे न देहे
येषां ते हि प्रकृतिसरसा हन्त मुक्ता न मुक्ताः ॥

भग। भवतु। किं गेयं—

रामा।—व्रजकेलिकर्म्म—

भग।——किमिह श्रेयः—

रामा।———सतां सङ्गतिः,

भग। किं स्मर्त्तव्य—

रामा।—मघारिनाम—

भग।——किमनुध्येयं—

रामा।———मुरारेः पदम्।

भग। क्व स्थेयं—

रामा।—व्रज एव—

भग।——किं श्रवणयोरानन्दि

रामा।———वृन्दावन,क्रीडैका

भग।—किमुपास्यमत्र—

रामा।—— महसी श्रीकृष्णराधाभिधे॥

भग। भद्रम्। उच्यतामुच्यताम्।

रामा। स्वगतम्। इतःपरं किं वक्तव्यं प्रश्नानुरूपमुदितमेव अधुना यद्वक्तव्यं तेनास्य सुखं भवति न वेति न जानामि।

इति क्षणमभिचिन्त्य प्रकाशम्।

निर्व्वाणनिम्बफलमेव रसानभिज्ञा-
श्चूष्यन्तु नाम रसतत्त्वविदो वयन्तु।

श्यामामृतं मदनमन्थरगोपरामा-
नेत्राञ्जलीचुलुकितावसितं पिबामः ॥

भगवान्। पुनरन्यदुच्यतां समानार्थकमेतत्।

रामा। इतः परं प्रतिपाद्यमेव नास्ति किमन्यद्वक्तव्यम्।

इति मनसि विचार्य्य प्रकाशम्।

नीचानेव पथश्चकोरयुवतीयूथेन याः कुर्व्वते
सद्यः स्फाटिकयन्ति रत्नघटितां याः पादपीठावलीम्।
याः प्रक्षालितमृष्टयोर्जललवप्रस्यन्दशङ्काकृत-
स्ताः कृष्णस्य पदाब्जयोर्नखमणिज्योत्स्ना श्चिरं पान्तु नः ॥

भगवान्। काव्यमेवैतत् पुनरुच्यताम्।

रामा। क्षणं विचिन्त्य।

श्रीवत्सस्य च कौस्तुभस्य च रमादेव्याश्च गर्ह्वाकरो
राधापादसरोजयावकरसो वक्षःस्थलस्थो हरेः।
बालार्कद्युतिमण्डलीव तिमिरैश्छन्देन वन्दीकृता
कालिन्द्याः पयसीव पीवविकचं शोणोत्पलं पातु नः ॥

भगवान्। इदमपि तथा।

रामा। चरणौ धृत्वा।

सखि न स रमणो नाहं रमणीति भिदावयोरास्ते।
प्रेमरसेनोभयमन इव मदनो निष्पिपेष बलात् ॥

अथवा। अहं कान्ता कान्तस्त्वमिति न तदानीं मतिरभू-
न्मनोवृत्तिर्लुप्ता त्वमहमिति नौ धीरपि हता।
भवान् भर्त्ता भार्य्याऽहमिति यदिदानीं व्यवसिति-

स्तथापि प्राणानां स्थितिरिति विचित्रं किमपरम् ॥

सार्व्व । ततो भगवता किमुदितम् ।

विप्रः । तदा यदवलोकितं तदाकलय ।

धृतफण इव भोगी गारुडीयस्य गानं
तदुदितमतिरत्याकर्णयन् सावधानम् ।
व्यधिकरणतयाक् वाऽऽनन्दवैवश्यतो वा
प्रभुरथ करपद्मेनास्यमस्याप्यधत्त ॥

राजा । भट्टाचार्य्य कोऽयं सन्दर्भः ।

भट्ट । महाराज निरुपधि हि प्रेम कथञ्चिदप्युपधिं न सहते इति पूर्व्वार्द्धे भगवतोः कृष्णराधयोरनुपधि प्रेम श्रुत्वा तदेव पुरुषार्थीकृतं भगवता मुखपिधानञ्चास्य तद्रहस्यत्वप्रकाशकम् ।

विप्रः । तदा चिकुरकलापं द्विधा कृत्वा तेनैव तच्चरणयुगं वेष्टयित्वा निपत्य गदितम् ।

महारसिकशेखरः सरसनाट्यलीलागुरुः
स एव हृदयेश्वरस्त्वमसि मे किमु त्वां स्तुमः ।
तवैतदपि साहजं विविधभूमिकास्वीकृति-
र्न ते नयति भूमिका भवति नोऽतिविस्मापनी ॥

इति चिरं चरणकमलं धृत्वा रुदन्नासीत् । मध्ये मध्ये किञ्चिद्रुदति च ।

आकस्मिको नु विधिना निधिरभ्यनायि
भग्नः किमिन्दुरमृतस्य यदेष पातः ।
आनन्दभूरुहफलं सुविपच्चरीणां
दृष्टं यदेव तव देव पदारविन्दम् ॥

भगवन् यथैवाद्य मया स्वप्ने दृष्टं तथैव साक्षादपि। इति पुनरपि पादौ धृत्वा रोदिति।

भगवान् गाढं परिष्वजते। अतः परं निमन्त्रयित्वा विप्रवरेण समागत्य देवापराह्णो जात इत्युक्तो भगवान् माध्यन्दिनकर्म्मणे चलितवान् वयमपि तच्चरणारविन्दं प्रणम्य तदन्तरेव प्रत्याजिगमिषवः स्मः।

सार्व्व। तदधुना विश्राम्यतां भवद्भिः।

विप्राः। यथाऽऽज्ञापयति भवान्।

राजा। पारितोषिकं ददाति।

विप्राः। सादरमादाय निष्क्रान्ताः। ततः प्रविशति दौवारिकः।

दौवारिकः। देव कर्णाटपतिना महाराजेन प्रेषितमुपायनमादाय तदमात्यो मल्लभट्टनामा पण्डितराजो द्वारमध्यास्ते।

सार्व्व। ज्ञायतेऽसौ महापण्डितो भवति।

राजा। प्रवेश्यताम्।

दौवा। यथाऽऽज्ञापयति देवः। इति निष्क्रम्य तमादाय प्रविशति।

सार्व्व। आगच्छन्तु भट्टाः। इत्युत्थानं नाटयति।

मल्लभट्टः। राजानमाशीर्भिरभ्यर्च्य। भट्टाचार्य्य किमिदं क्रियते नाहं तवाभ्युत्थानीयः। अथवा

सदैव तुङ्गः किलकाञ्चनाचलः
सदैव गम्भीरतमाः पयोधराः।

सदैव धीरा विनयैकभूषणा
लक्ष्मीः प्रकृत्यैव जनैः समीयते ॥

राजा। इदमासनम्।

मल्ल। यथाऽऽज्ञमुपविशामि। इत्युपविशति।

राजा। अपि कुशलं कर्णाटपतेः।

मल्ल। यस्य भवद्विधाः सुहृदस्तस्य सततमेव तत्। किन्तु साम्प्रतमधिकमपि।

राजा। कीदृशं तत्।

मल्ल। महाराज एतस्माज्जनपदतः सतीर्थयात्राव्याजेन द्रुतकनकद्युतिर्यतीन्द्रः कोऽप्येको यदवधि हन्त दक्षिणाशां सम्प्राप्तस्तदवधि सोऽपि निर्वृतात्मा।

सार्व्व। सोत्कण्ठम्। भट्टाः कथयन्तु कथयन्तु।

राजा। कथमिव।

मल्ल। यथोत्तरमेव दक्षिणस्यां दिशि कियन्तः कर्म्मनिष्ठाः कतिचिदेव ज्ञाननिष्ठा विरला एव सात्वताः प्रचुरतराः पाशुपताः प्रचुरतमाः पाषण्डिनः। तेन तेषामन्योन्यवादविसंष्ठुलानामुच्चावचनिर्व्वचनचातुर्य्यधुर्य्याणां स्वस्वमताचार्य्यवर्य्याणां प्रसङ्गेन प्रायशो बहुलोद्वेग एव नो महीपालः।

राजा। ततः।

मल्ल। तत आकस्मिकप्रवेशमात्रेणैव तस्य यतिपतेर्दिशि विदिशि सानन्दचमत्कारं समूढेषु आबालवृद्धतरुणेषु लोकेषु दिदृक्षयोपनतेषु पण्डितमण्डलेष्वपि परमनयनसुभगया वपु-

र्लदम्यैव प्रकटीकृतं महिमानमनुभूय विनोपदेशेनापि कर्त्तैवं स्याम इति तत्कालसमुदित्वरवासनाविशेषेण जातपुलकाः सवः सर्व्वं एव स्वस्वमतप्रच्यावेन तत्पथप्रविष्टा बभूवुः। तस्य परम्पराश्रवणेन लब्धपरमानन्दोऽस्मन्नरलोकपालस्तद्विशेष-चरितमवगन्तुं गूढवेशेन ब्राह्मणान् प्रहित्य यावत् सेतुबन्धं ततः प्रत्यागमनावधि च तस्यालौकिकचमत्कारं तत्तन्मुखाद-नुभवन् भव-दव-दहन-ज्वालामेव विस्मृतवान्।

राजा। अमात्य धन्योऽसौ यस्मदीयो महीपालः।

सार्व्व। किं किं श्रुतं किञ्चित् कथ्यताम्।

राजा। अमात्य कथ्यताम्।

मन्त्र। एकस्मिन्नहनि निजसुखावेशेन विगलद्विलोचनज-लसकल-धौत-कलधौतशरीरं रोमाञ्चसञ्चयेन मुकुलाऽऽकु-लायमान-कदम्बभूरुहाकारं भगवन्नामसङ्कीर्त्तन-सगद्गदस्वरं स्वरंहसा स्वानन्दवैवश्येन वर्त्मपरिचयाभावतोऽपि यथाकर्त्तैव चलन्तं भगवन्तमालोक्य पाषण्डिनो वैष्णवोऽयं भवति भिक्षुर्भ-गवत्-प्रसादनाम्नैवेदं ग्रहीष्यति तदेतदन्नमेनमाशयाम इति अभोजनयोग्यमशुचितरान्नं स्थाल्यां निधाय पुरो गत्वा स्वा-मिन् भगवत्प्रसादमिमं गृहाणेति श्रावयित्वा समूचिरे चिरेण।

भगवान्। सर्व्वज्ञोऽपि भगवत्प्रसादनाम्ना तत्त्यागमसह-मान एव पाणौ गृहीत्वा तत्सहितमेव पाणिमुद्गम्य चलितवान्। समनन्तरमेव महता केनापि विहगेन चञ्चुपुटे कृत्वा तदन्नं भगवत्करतलतः समादाय समुड्डीनम्।

सार्व्व। अहो मोहस्य महिमैषा।

यन्मायया मूढधियो भ्रमन्ति भुवनेश्वराः।
तमपीह भ्रमयितुं क्षुद्राणामयमुद्यमः॥

मन्त्र। अन्येद्युरन्यत्र कुत्रापि ब्राह्मणगृहे यदृच्छयोपगतस्तं ब्राह्मणं केवलं रामरामेति नाममात्रजपपरायणं दृष्ट्वा गतवान्। प्रत्यागमनसमये पुनस्तमालोकयितुं तत्रैव समुत्तीर्णः। तमेव कृष्ण कृष्ण कृष्णेत्येवं जपन्तं दृष्ट्वा पृष्टवान्। ब्राह्मण कथं गमनसमये राम राम रामेत्येवं जपन् भवानालोकि। अधुना कृष्ण कृष्ण कृष्णेत्येव जपन्नालोक्यते तत्कथयास्य तत्त्वमिति। तदा स ऊचे। भगवन् तवैव प्रभावोऽयं यतः शैशवावधि रामनाममात्रजपपरायणोऽहं भवद्दर्शनमात्रेण कृष्ण कृष्ण कृष्णेत्येव मे वदनान्निःसरति। बलादप्यहमेतन्निवर्त्तयितुं न शक्नोमीति तवैव दर्शनदोषोऽयं न ममेति।

राजा। भट्टाचार्य्य कोऽत्र सन्दर्भः।

भट्टा। महाराज यद्यपि समानार्थमुभयमेव।

रमन्ते योगिनोऽनन्ते सत्यानन्दचिदात्मनि।
इति रामपदेनासौ परं ब्रह्माभिधीयते॥

यथा। कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते॥

इति परब्रह्मार्थत्वे समानमेव तथाऽपि रतिमतां राम इत्युक्ते रघुनाथस्फूर्त्तिः। कृष्ण इत्युक्ते व्रजराजकुमारस्फूर्त्ति-

रिति। श्रीकृष्णचैतन्यदेवस्य कृष्णात्मकत्वात्तद्दर्शने कृष्णस्फू-र्त्तिरेव स्फुरतीति रहस्यम्।

अपि च। सहस्रनामभिस्तुल्यं रामनाम वरानने।
सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत्फलम्॥
एकावृत्त्या तु कृष्णस्य नामैकं तत् प्रयच्छति।

इति रामनामतः कृष्णनाम श्रेयः।

मन्त्र। सत्यमेतत् अस्माभिरपि भूपालस्य सदसीदमेव निरणायि। एवं दक्षिणस्यां दिशि ये ये विष्णुभक्तास्ते किल रघुनाथभक्तिद्वारैव वनवासे पञ्चवट्यादिषु रघुनाथचरित-चारुस्थलदर्शनात्तत्रैवानुरक्तिस्तेषां स्वाभाविकी सम्प्रति यती-न्द्रमेनमालोक्य कृष्णपक्षपाता एव बभूवुः। एवं क्वचन स्थले कमपि ब्राह्मणमतिमूर्खतया शब्दार्थाववोधविरहेण शुद्धिव-र्ज्जितं भगवद्गीतां पठन्तं प्रायशः सर्व्वैरेव विहस्यमानमथ च यावत्पाठं तावदेव पुलकाश्रुविवशं विलोक्य अहो अयमुत्त-मोऽधिकारीति भगवान् तमवादीत्। ब्रह्मन् यत् पठ्यते तस्य कोऽर्थं इति स प्रत्यूचे। स्वामिन्नाहमर्थं किमपि वेद्मि अपि तु पार्थरथस्थं तोत्रपाणिं तमालश्यामं श्रीकृष्णं यावत् पठामि तावदेव विलोकयामीति। तदा भगवतोक्तम्। उत्तमोऽधि-कारी भवान् गीतापाठस्येति तमालिलिङ्ग। तदनु स खलु गीतापाठजादानन्दादपि प्रचुरतरमानन्दमासाद्य स्वामिन् स एव त्वमिति भूमौ निपत्य प्रणमन्नतिशयविक्लवो बभूव।

सार्व्व। उचितमेवास्य तथा ज्ञानं निरन्तरभगवत्स्फूर्त्ति-

निर्म्मलहृदयत्वेन यथार्थस्फूर्त्तिरेव भवति।

मल्ल। एवमेवास्मत्समदसि विचारितमस्ति। एवमनन्तैव विचित्रा कथा तैस्तैर्गूढपुरुषैः कथिता कति कथनीया भवति।

सार्व्व। एवमेतत्।

राजा। सोत्कण्ठम्। हन्त कदा भगवान् वीक्षितव्यः।

नेपथ्ये। हन्त वीक्षणसमयोऽयं तदलं विलम्बेन।

राजा। सहर्षम्। भट्टाचार्य्य यथाऽयं यथा प्रस्तावमेव जगन्नाथदर्शनसमयं प्रस्तौति तथा मन्ये। श्रीकृष्णचैतन्योऽप्यागतप्रायः।

भट्टा। भट्टारक एवमेव।

राजा। भट्टाचार्य्य अयं पुरुषोत्तमः पुरुषोत्तमक्षेत्रस्य वीजभूतं किमपि भविष्यति। अस्मात् किल बह्वव एवानन्दाङ्कुरा जायेरन्। नीलाचलचन्द्रस्य सेवा सौभाग्यविशेषोऽपि भविष्यति।

सार्व्व। सत्यमेतत् पुण्यात्मानो हि नरदेवा देवांशभूता एव तेन भवता मनसि यदुन्मीलति तदेव सत्यम्। नेपथ्ये हन्त भोः सत्यं सत्यम्।

राजा। सहर्षम्। अद्यापि तथैव वाक् शकुनम्। तत्पश्य ज्ञायतां कोऽयम्।

भट्टा। तैर्थिकस्तैर्थिकान्तरेण सह जगन्नाथदर्शनोत्कण्ठां प्रपञ्चयति। प्रविश्य

दौवारिकः।

देव अतिसत्वरं धावमानाः कतिचित्पुरुषाः समायान्ति।

राजा। ज्ञायतां निरस्त्राः सास्त्रा वा तेऽमी।

दौवा। निष्क्रम्य पुनः प्रविश्य च। देव निरस्त्रा एव सर्व्वे।

सार्व्व। नूनं प्रत्यावर्त्तते स एव देवः।

पुनर्नेपथ्ये। सम्भूय हरिं वद हरिं वदेति कोलाहलः।

सार्व्व। अवितथमेव भगवान् प्रत्यावृत्तः।

नेपथ्ये। तीर्थेष्वमीषु सकलेषु तथा न तृप्ति-
जातास्य सत्वरमतः पुरुषोत्तमे सः।
प्रत्याययौ कलयजङ्गमरत्नसानू
रत्नाकरस्य सविधेः सुमुखो विधिर्नः॥

सार्व्व। महाराज यदयं गोपीनाथाचार्य्यः सहर्षमालपति तदयमागत एव भगवान् तदहमुपसर्पामि।

राजा। त्वरतां त्वरताम्। मल्लभट्ट त्वमप्यधुना विश्रामं कुरु। वयमपि कार्य्यविशेषाय गच्छाम। इति निष्क्रान्ताः सर्व्वे।

तीर्थाटनो नाम सप्तमोऽङ्कः॥

---

## अष्टमाङ्कः।

ततः प्रविशति सार्व्वभौमादिभिर्दामोदर-जगदानन्दादिभिश्चानु-गम्यमानः श्रीकृष्णचैतन्यः।

श्रीकृष्ण। सार्व्वभौम एतावद्दूरं पर्य्यटितं भवत्सदृशः कोऽपि न दृष्टः केवलमेव रामानन्दरायः। स त्वलौकिक एव भवति।

सार्व्व। देव अतएव निवेदितं सोऽवश्यमेव द्रष्टव्य इति।

श्रीकृष्ण। कियन्त एव वैष्णवा दृष्टास्तेऽपि नारायणोपासका एव। अपरे तत्त्ववादिनस्ते तथाविधा एव। निरवद्यं न भवति तेषां मतम्। अपरे तु शैवा एव बहवः। पाषण्डास्तु महाप्रबल-भूयांस एव। किन्तु भट्टाचार्य्य रामानन्दमतमेव मे रुचितम्।

सार्व्व। भवन्मत एव प्रविष्टोऽसौ न तस्य मतकर्त्तता। स्वामिन्नतःपरमस्माकमप्येतदेव मतं बहुमतं सर्व्वशास्त्रप्रतिपाद्यञ्चैतदिति।

गोपीनाथाचार्य्यः। भट्टाचार्य्य भगवतोऽवस्थानस्थानं चिन्तितमस्ति।

भट्टा। अपवार्य्य राज्ञैव चिन्तितम्।

गोपी। जनान्तिकम्। कीदृशं तत्।

भट्टा। काशीमिश्रस्यालयः।

गोपी। साधु साधु सिंहद्वारनिकटवर्त्ती भवति। यतः सकाशात् सुखेनैव जगन्नाथदर्शनं भविष्यति। इति समुद्रकूलात् पुरुषोत्तमग्रामं विशन्ति।

ततः प्रविशन्ति भगवज्जगन्नाथप्रसादमालापाणयो जगन्नाथदेवपशुपालकाः काशीमिश्रः परीक्षामहापात्रश्च।

सार्व्व। अयमयं श्रीकृष्णचैतन्यः स्वामी। इति सोत्कण्ठमुपसर्पन्ति।

सार्व्व। भगवन् एते भगवतः पशुपालाः। एष काशीमिश्रनामा। एष सर्व्वाधिकारी प्राड्विवाको भगवतः।

काशीमिश्रपरीक्षामहापात्रे। उपसृत्य दण्डवन्निपततः।

पशुपालकाः। मालां कण्ठे दत्वा प्रणमन्ति।

भगवान्। अहो किमेतत् भगवत्पार्षदा भवन्तो मदाराध्या एव कथमयोग्यमेतत् क्रियते। इति सर्व्वान् प्रणम्यालिङ्गति।

पशुपालाः। सार्व्वभौम भगवतो दिवास्वप्नसमयः सम्प्रति-जातः किमिदानीं तत्रैव गत्वा स्वामिना स्थातव्यं किं वा विश्रम्य स्नानादि कृत्वा समागन्तव्यम्।

सार्व्व। स्नात्वा देवदर्शनं कर्त्तव्यम्।

काशीमिश्रः। तदित एवागच्छन्तु। इति स्वालयमुपसारयति।

सार्व्व। भगवन्निदं खलु अस्यैव मिश्रस्य पुरं श्रीचरणानां कृते शोधयित्वा स्थापितमस्ति। तदत्रैव प्रविशन्तु भगवन्तः।

इति प्रवेशं नाटयन्ति। पशुपालादयः प्रणम्य निष्क्रान्ताः।

ततः प्रविशन्ति बहव एवोत्कलवासिनो महाशयाः। केचित्।

तदानीमस्माकं समजनि न तादृक् सुभगता
गतास्तेनास्माकं परमकरुणानेत्रपथम्।
इदानीं नो भाग्यं समघटत यज्जङ्गममिमं
स्वयं नीलाद्रीशं वत नयनपातैर्विचिनुमः॥

इत्युपसर्पन्ति।

सार्व्व। भगवन् अयं भगवतोऽनवसरकालाङ्गसेवकोऽन्त-रङ्गो जनार्द्दननामा। अयं स्वर्णवेत्रधारी पार्षदः कृष्णदास-नामा। अयं लेखनाधिकारी शिखिमाहाती भ्रातरौ चाप्येतौ। अयं दासमहासोआरनामा महानसाधिकारी। एते निसर्गभ-क्ताः श्रीजगन्नाथस्य। इमे चन्दनेश्वरमरारिसिंहेश्वरा ब्राह्म-

णोत्तमा राजमहापात्राणि स्वभाववैष्णवाः। अयं प्रहरराज-महापात्रं परमो भगवद्भक्तः। अयं प्रद्युम्नमिश्रः। अयं विष्णु-दासः। इमे रामानन्दरायःसहोदराः। तन्मध्ये अयं वाणी-नाथपट्टनायकः। अयं तस्य जनको भवानन्दरायः। इमे चान्ये गौडोत्कलवासिनः सर्व्वे त्वच्चित्तास्त्वद्गतप्राणा दण्डवत् प्रणमन्ति। एतानात्मीयत्वेनानुग्रहीतुमर्हन्ति।

भगवान्। आत्मान एवामी कथमेषामात्मीयत्वं विशेषतो जगन्नाथसेवकाः।

सार्व्व। भगवन् जगन्नाथस्य भवतश्च कृष्णचैतन्यत्वमवि-शिष्टमेव तथाप्यस्ति कश्चिद्भेदः। असौ दारुब्रह्म भवान् नर-ब्रह्म।

भगवान्। कर्णौ पिधाय।

अत्युक्तिरेषा तव सार्व्वभौम
तनोति कामं श्रवसोः कटुत्वम्।
तीक्ष्णो हि गौडस्य रसस्य पाक-
स्तिक्तत्वमायाति न चेति बद्धम्॥

सार्व्व। भगवान् गौडदेशस्य रसस्य पाकः सुरस एव यत्रा-विरासीद्भगवान्।

श्रीकृष्णचै। विरम विरम अतः परं श्रीपुण्डरीकाक्षदर्श-नस्य समयो जातः।

सार्व्व। एवमेव तदुपसर्पन्तु भगवन्तः। इति भगवन्तमग्रे कृत्वा परिक्रामन्ति। नेपथ्ये।

अयमेष दृष्टो रसायनं
परमानन्दपुरीश्वरः पुरस्तात्।
दमनार्थमघौघकारिणां
धृतदण्डः समये समुज्जिहीते॥

सार्व्व। आकर्ण्य। अहो अवसरः संवृत्त एव देवस्य यदयं प्रस्तौति।

श्रीकृष्णचै। स्वगतम्। अहो परमानन्दपुरीश्वरस्तावन् मुनीन्द्रमाधवपुरीश्वरस्य शिष्यः। यत्र खलु अग्रजस्य विश्वरूपस्य समग्रमैश्वरं तेजः प्रविष्टं स एव वा समागतः। भवतु देवं विलोक्य तत्त्वमस्य ज्ञेयम्।

सार्व्व। इयं पुरो भगवतः परमानन्दपुरी तदेनां प्रविशन्तु।

इति सर्व्वे भगवता सह श्रीजगन्नाथदर्शनार्थं निष्क्रान्ताः।

ततः प्रविशति परमानन्दपुरी।

पुरी। सोत्कण्ठम्।

कदाऽसौ द्रष्टव्यः स खलु भगवान् भक्ततनुमा-
निति प्रौढोत्कण्ठाविलुलितमहो मानसमिदम्।
चिराद्द्य प्राप्तः स खलु फलकालो मम पुन-
र्न जाने कीदृक्षं जनयति फलं भाग्यविटपी॥

इति परिक्रामन्। भगवन् श्रीजगन्नाथ क्षम्यतां त्वामनालोक्य यदग्रे तमुपसर्पामि तत्तादृशीमुत्कण्ठां सर्व्वज्ञो जानन्त्येव। पुरोऽवलोक्य। अहो इहैव भवितव्यं भगवता तेन। यतः।

जगन्नाथद्वारादपि बहुलकोलाहलकृतां
समूहो लोकानामिह सरति नैवापसरति ।
अतो मन्ये धन्ये धरणि तव पुण्येन मिलितः
स एवायं देवः कनकरुचिरत्रैव भविता ॥

तदहमुपसर्पामि । इत्युपसर्पति ।

ततः प्रविशति परिजनैः सार्द्धं श्रीजगन्नाथदर्शनानन्द-निस्पन्दः श्रीकृष्णचैतन्यः ।

श्रीकृष्ण । स्मृतिमभिनीय । अहो परमानन्दपुरीश्वरः साम्प्रतमागमिष्यतीव लक्ष्यते । यतः ।

भगवद्दर्शनसुखमनुसुखान्तरं किमपि साम्प्रतं भावि ।
आसन्नशर्म्मशंसी प्रसाद आकस्मिको मनसः ॥

इति सोत्कण्ठं तिष्ठति ।

पुरी । अग्रतोऽवलोक्य । अहो अयमसौ ।

जयति कलितनीलशैलचन्द्र-
क्षणरसचर्व्वणरङ्गनिस्तरङ्गः ।
कनकमणिशिलाविलासवक्षः-
स्थलगलदस्रमजस्ररोमहर्षः ॥

श्रीचै । अग्रतोऽवलोक्य । अयमेवासौ यदिदमाकस्मिकमागमनमिहैतस्य । इत्युत्थाय प्रणम्य । स्वामिन् पुरीश्वरोऽसि ।

पुरी । ससम्भ्रमम् । भगवन् त्वद्दर्शनार्थमेवायमहमुत्कण्ठितो वाराणसीत आगच्छन्नस्मि ।

श्रीचै । अनुगृहीतोऽस्मि ।

उपसृत्य जगदानन्दः। स्वामिन् इत इतः। इति विश्रामयति।

सार्व्व। भोः स्वामिन्नेदमतिचित्रम्।

ये केऽपि याः काश्चन सप्रवाहा
नदाश्च नद्यश्च भवन्ति भूमौ।
कस्यापि रत्नाकरमन्तरेण
कुत्रापि नास्था न च सन्निवेशः॥

नेपथ्ये। अहो रसकलावतो भगवतो रसाचार्य्यकं
ग्रहीतुमिव मूर्त्ततां श्रयित भिक्षुवेषं वपुः।
यदेतदवनीतले सकल एव दामोदर-
स्वरूपमिति भाषते तदपृथक्तया प्रेमतः॥

सार्व्व। अहो लोकानामत्र भगवति नैसर्गिकी रतिः। यदिदं परोक्षेऽपि सर्व्वे भगवत्तामेवास्य गायन्ति।

श्रीचै। श्रुतिमभिनीय। अहो दामोदरस्वरूपमिति नामाकर्णितं कश्चिदयमपि समागमिष्यतीव लक्ष्यते।

सार्व्व। स्वामिन् प्रायशो भवदवतारे केचित् पूर्व्वं केचित् पश्चाच्च भवदीया एव सर्व्वे अवतेरुः। समये सर्व्वैरेव मिलितैर्भवितव्यम्। अत एव सप्रवाहा इत्युक्तम्।

ततः प्रविशति दामोदरस्वरूपः।

दामोदर स्वरूपः। आकाशे लक्ष्यं बद्धा।

हेलोद्धूलितखेदया विशदया प्रोन्मीलदामोदया
शाम्यच्छास्त्रविवादया रसदया चित्तार्पितोन्मादया।
शश्वद्भक्तिविनोदया समदयामाधुर्य्यमर्य्यादया

श्रीचैतन्य दयानिधे तव दया भूयादमन्दोदया ॥

इत्युपसर्पति

गोपी। पुरोऽवलोक्य स्वगतम्। अये श्रुतं मया चैतन्यानन्द-शिष्यः परमविरक्तो भगवद्भक्तोऽतिविद्वान् कश्चिद्दामोदरस्वरूपं नाम। यः खलु गुरुणा बहुतरमभ्यर्थितोऽपि वेदान्तमधीत्याध्यापयेति न च तच्च कृतवान्। अपि तु

समस्तहानाय तुरीयमाश्रमं
जग्राह वैराग्यवशेन केवलम्।
श्रीकृष्णपादाब्जपरागरागत-
स्तुच्छीचकारैनमहो वहन्नपि ॥

स एवायं तद्भगवते निवेदयामि। इत्युपसृत्य। भगवन्नयमयं श्रुतचरो दामोदरस्वरूपः।

भगवान्। क्व स क्व सः। इति सोत्कण्ठमुपसर्पति।

स्वरू। उपसृत्य पादयोः प्रणमति।

श्रीचै। बाहुभ्यामुत्थाप्यालिङ्गति।

नेपथ्ये। ईश्वरपुरीनिषेवणरतः स्वतः कृष्णभक्तश्च।

अयमेति विषादहृदयो विरक्तिमान् सकलविषयेषु ॥

सार्व्व। आकर्ण्य। अये भगवत्पुर-परिचारकः कोऽपि समायाति। कस्तावदसौ। परीक्षामहापात्रस्य प्रतिनिधिर्वा। नासौ तथा विरक्तः।

श्रीचै। अहो पुरीश्वरस्य सकाशात् कश्चिदायातीव।

सार्व्व। अवलोक्य। जानीम। इति निरूपयति।

ततः प्रविशति गोविन्दनामा कश्चित्।

गोविन्दः। स्वगतम्। प्रहितोऽस्मीश्वरपुर्य्या महाप्रभोः सविध एव याहीति। उपसन्नं तदिदमथो न वेद्मि निजभाग्यमहिमानम्। इत्युपसृत्य प्रणम्य चाञ्जलिं बद्ध्वा। स्वामिन्।

दृष्टं मया प्रथममस्य यदेवरूपं
तेनैव निर्वृतिरहो मम नान्यवेषम्।
पश्यामि तं त्वमुपयाहि तमित्यहं ते
सम्प्रेषितश्चरणसीम्नि पुरीश्वरेण॥

श्रीचै। अस्ति तथैव मयि तेषामखण्डमेव वात्सल्यम्।

सार्व्व। त्वं तस्य परिचारकः।

गोवि। अथ किम्।

सार्व्व। स्वामिन् कथमसौ ब्राह्मणेतरं परिचारकत्वेनानुगृहीतवान्।

श्रीचै। भट्टाचार्य्य मैवं वादीः।

हरेः स्वतन्त्रस्य कृपाऽपि तद्व-
द्वृत्ते न सा जातिकुलाद्यपेक्षाम्।
सुयोधनस्यान्नमपोह्य हर्षा-
ज्जग्राह देवो विदुरान्नमेव॥

सार्व्व। एवमेव।

श्रीचै। भवतु यद्यपि पूज्यानां परिचारकेण स्वपरिचर्य्या कारयितुं न युज्यते तथाऽपि तदाज्ञया तथैव कर्त्तव्यम्।

इति तमनुगृह्णाति। प्रविश्य सत्वरम्

मुकुन्दः। स्वामिन् ब्रह्मानन्दभारती भवन्तं दिदृक्षमाण आगतोऽस्ति। यद्याज्ञापयसि तदिहैवानयाम।

श्रीचै। शान्तं मान्याः खलु भवन्त्यमी तन्मयैव गन्तव्यम्।

सर्व्वे। अलौकिकानामपि लौकिकत्व-
मलौकिकत्वप्रथनाय नूनम्।
भुवः प्रयाणं किल विष्णुपद्या
दिवं नयत्येव शरीरभाजः॥

इति भगवन्तमग्रे कृत्वा परिक्रामन्ति। ततः प्रविशति चर्म्माम्बरो ब्रह्मानन्दः।

ब्रह्मा। पुरोऽवलोक्य। अयमेव श्रीकृष्णचैतन्यः।

तथा हि। कनकपरिघदीर्घदीर्घबाहुः
स्फुटतरकाञ्चनकेतकीदलाभः।
नवदमनकमाल्यलाल्यमान-
द्युतिरतिचारुगतिः समुज्जिहीते॥

श्रीचै। उपसृत्य तमवलोक्यापि चर्म्मचेलत्वमात्मनोऽनभिमतमिति बोधयन् सावहित्थम्। मुकुन्द क्वासौ।

मुकु। अयमयम्।

श्रीचै। नहि स चेदभविष्यत्तदा कथं चर्म्मचेलत्वेन बाह्य-वेषावेशवशत्वमस्याभविष्यत्।

ब्रह्मा। आकर्ण्य स्वगतम्। अहो असौ चर्म्मचेलत्वं न रोचत इव भवति हि।

दम्भैकमात्रप्रथनाय केवलं

चर्म्माम्बरत्वादि न वस्तु साधनम्।
चलद्भिरुर्व्यामृजुनैव वर्त्मना
सुखेन गम्यस्य समाप्यतेऽवधिः॥

किमेते नेति चर्म्म जिह्वासति।

श्रीचै। दामोदरं निरीक्षते।

दामोदरः। इङ्गितं बुद्धा सत्वरं वहिर्वासः प्रयच्छति।

ब्रह्मा। परिदधाति।

श्रीचै। उपसृत्य प्रणमति।

ब्रह्मा। ससाध्वसादरम्। स्वामिन् लोकशिक्षार्थं यद्यपि भवतामिदमुचितमेव तथाऽपि नोऽतिभयजनकमेतत् तदपरं नैतदनुष्ठेयम्। पश्य पश्य।

नीलाचलस्य महिमा न हि मादृशेन
शक्यो निरूपयितुमेवमलौकिकत्वात्।
एते चरस्थिरतया प्रतिभासमाने
द्वे ब्रह्मणी यदिह सम्प्रति गौरनीले॥

श्रीचै। सम्प्रति शब्दस्य वर्त्तमानत्वादचिरागते भवत्येव गौरब्रह्मता नामैकदेशवर्त्तिब्रह्मशब्दत्वाच्च।

ब्रह्मा। व्याप्यव्यापकभावत्वेनैव तदनुमीयते। व्याप्यत्वञ्च चर्म्मत्यागेनैव ज्ञायताम्।

सार्व्व। सम्यगाह श्रीपादाः।

ब्रह्मा। सार्व्वभौम पश्य पश्य।

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी।

इति नामान्यनेनैव सान्वयत्वं प्रपेदिरे ॥

चन्दनाङ्गदित्वं स्वप्रसादचन्दनाक्तडोरेणैव भगवद्भिः श्रीजगन्नाथदेवैरेव क्रियमाणमस्ति। पश्य पश्य भगवद्रूपमात्रस्य परमानन्दप्रदत्वं किं पुनः स्वयं भगवतः श्रीकृष्णस्य। अहो चित्रम्।

आनन्दानुभवैकसाधनमहो रूपं घनानन्दचि-
द्बाह्यान्तःकरणोर्म्मिवृत्तिविरहस्यापादकं पश्यताम्।
हित्वानन्दथुलब्धये हृदि निराकारन्तु यैश्चिन्त्यते
मन्ये तान् भ्रमयत्यहो भगवती सा काऽपि दुर्व्वासना ॥

अपि च। अमूर्त्तत्वं तत्त्वं यदि भगवतस्तत्कथमहो
महाख्यादीनामपि न भगवत्तत्त्वगणना।
न मूर्त्तामूर्त्तत्वे भवति नियमः किन्तु परमो
य आनन्दो यस्मादपि स च स ईशो मम मतम् ॥

सार्व्व। स्वामिन्नेवमेव। आनन्दमयोऽभ्यासादित्यत्र व्याख्यातञ्चैतत्। स्वयमानन्दः परानप्यानन्दयति। यथा प्रचुरधनः परेभ्योऽपि धनं ददाति इति प्राचुर्य्यार्थे मयडिति किन्तु तत्कृपा चेद्भवति तदा निराकारभावनातोऽपि पुनः श्रीविग्रहमाधुर्य्य एव निपतति। उक्तञ्चाभियुक्तैः।

अद्वैतवीथीपथिकैरुपास्याः
स्वानन्दसिंहासनलब्धदीक्षाः।
शठेन केनापि वयं हठेन
दासीकृता गोपवधूविटेन ॥ इति

दामो। ब्रह्मानन्दं प्रति श्रीपादा मया निमन्त्रिताः स्थ तदिदानीमनन्तरकरणीयाय गच्छन्तु।

श्रीचै। स्वामिन् एवमेव युज्यते।

ब्रह्मा। यद्भिरुचितं भवते। इति दामोदरादिभिः कतिभिः सह निष्क्रान्तः।

श्रीचै। सार्व्वभौम त्वमपि गन्तुमर्हसि।

सार्व्व। देव किञ्चिन्निवेदनीयमस्ति।

श्रीचै। किं तत्।

सार्व्व। स्वामिन् अभयञ्चेद्दीयते तदा निवेद्यते।

श्रीचै। असाध्वसमेव कथ्यताम्।

सार्व्व। भूपालः श्रीचरणावलोकनाय समुत्कण्ठते। यद्यनुमन्यसे तदा तमानयाम।

श्रीचै। कर्णौ पिधाय। सार्व्वभौम भवताऽपीदमुच्यते।

निष्किञ्चनस्य भगवद्भजनोन्मुखस्य
पारं परं जिगमिषोर्भवसागरस्य।
सन्दर्शनं विषयिणामथ योषिताञ्च
हा हन्त हन्त विषभक्षणतोऽप्यसाधु॥

सार्व्व। स्वामिन् सत्यमेवैतत् किन्त्वसौ श्रीजगन्नाथसेवकः।

श्रीचै। आकारादपि भेतव्यं स्त्रीणां विषयिणामपि।
यथाऽहेर्मनसः क्षोभस्तथा तस्याकृतेरपि॥
यद्येवं पुनरुच्यते तदाऽत्र न पुनरहं द्रष्टव्यः।

सार्व्व। तूष्णीं तिष्ठति।

श्रीचै। भट्टाचार्य्य अतिकालो बभूव।

सार्व्व। यथारुचितं स्वामिने। इति निष्क्रान्तः।

श्रीचै। मुकुन्द मयि दक्षिणस्यां दिशि गते सति श्रीपाद-नित्यानन्देन क्व गतम्।

मुकु। गौडे। उक्तञ्चेदं भगवदागमनसमयमनुमाय पुनः सर्व्वैरद्वैतप्रमुखैः सह मयात्रागन्तव्यमिति।

गोपी। सम्प्रति द्वैराज्यादिकमपि नास्ति। पन्थाश्च सुगमः। गुण्डिचायात्रा च नेदीयसी। तदागमनसामग्री सर्व्वैवास्ति। किन्तु स्वामिनां प्रत्यागमनवार्त्ता तावद्दूरगामिनी चेद्भवति अथवा कृतं सन्देहेन।

ध्वान्तं विधूय किरणैरुदितस्य भानो-
श्चन्द्रस्य वा जगति के कथयन्ति वार्त्ताम्।
लोकोत्तरस्य किल वस्तुन एव सेयं
शैली स्वयं स्वमभितः प्रकटीकरोति॥

तत्स्वामिन् जगन्नाथदेवस्य सायाह्नधूपसमयो जातः। यद्य-नुमन्यसे। इत्यर्द्धोक्ते साध्वसं नाटयति।

श्रीचै। आचार्य्य गम्यतां धूपावलोकनाय अहमपि पुरीश्वर-स्वरूपाभ्यां सह सङ्कथनाय गच्छामि। इति भगवान् निष्क्रान्तः।

गोपी। अहो निष्क्रान्त एव भगवान् तदहमपि धूपं दृष्ट्वा पुनस्तत्रैव मिलिष्यामि। इति कतिचित्पदान्यादधाति।

नेपथ्ये। आसन्ने रथविजयेऽखिलेश्वरस्य
प्राप्तोऽयं धरणिपतिः प्रतापरुद्रः।

भूयोऽयं यतिवृषभस्य गौरमूर्त्तेः
प्रत्यक्षीकरणकृते प्रयत्नकृत् स्यात्॥

गोपी। अहो अयं भट्टाचार्य्यस्यालापः श्रूयते तन्महीपालेन गजपतिना समागतमिव। भवत्यपि अभ्यर्णोऽयं रथमहोत्सवस्तदहं श्रीजगन्नाथमालोक्य यावदागच्छामि। इति निष्क्रान्तः।

ततः प्रविशति भट्टाचार्य्यः।

भट्टाचार्य्यः। आगमनसमकालमेव यदहमाहूतोऽस्मि गजपतिना तेनोन्नीतं श्रीकृष्णचैतन्यदर्शनार्थमयमुत्कण्ठते। इति परिक्रम्यावलोक्य च। अहो अयमयमवनीपतिः। यावदुपसर्पामि। इत्युपसर्पति।

ततः प्रविशत्यासनस्थो राजा महापात्राणि च।

राजा। सोत्कण्ठमात्मगतम्।

अभून्न चेष्टा मम राज्यचेष्टा
सुखस्य भोगस्य बभूव रोगः।
अतःपरं चेत् स न वीक्षते मां
न धारयिष्ये वत जीवनञ्च।

सार्व्व। अन्तः सचिन्तित इव लक्ष्यते महाराजः। यदुपनतमपि मां न गोचरीकरोति तत् स्वयमेव परिचीये। जयति जयति महाराजः।

राजा। अवधानं नाटयित्वा। कथम्। भट्टाचार्य्योऽसि। एहि एहि। इति प्रणमति।

सार्व्व। आशीर्भिरभिवन्द्योपविशति।

राजा। भट्टाचार्य्य निवेदितं भवता भगवते श्रीकृष्णचैतन्याय।

सार्व्व। अथ किम्।

राजा। किमाज्ञाप्तम्।

सार्व्व। किं कथयामि।

राजा। सविषादम्। तदैव मया ज्ञातमस्ति यद्भवता स्वयमुपेत्य सहर्षोल्लासं न कथितम्। हा धिक्।

अदर्शनीयानपि नीचजातीन्
स वीक्षते चारु तथाऽपि नो माम्।
मदेकवर्ज्जं कृपयिष्यतीति
निर्णीय किं सोऽवततार देवः॥

क्षणं विचिन्त्य। अये श्रूयताम्।

ज्ञातैव तस्य किल सत्यगिरः प्रतिज्ञा
सम्प्रत्यहो क्रियत एष मयाऽपि पक्षः।
प्राणांस्त्यजामि किमु वा किमु वा करोमि
तत्पादपङ्कजयुगं नयनाध्वनीनम्॥

इति सवाष्पस्तिष्ठति।

सार्व्व। स्वगतम्। अतिभूमिं गतोऽयमस्यानुरागपरभागः किं करोमि।

पुनर्गत्वा ब्रूयामहह तदिदं नैव घटते
स निर्व्वन्धस्तस्य द्रढिमगरिमद्राघिमघनः।
सुदुर्व्वारोऽप्यस्य प्रथितपटिमप्रौढिमवचो

महारागः कश्चित् कमपि न विजेतुं प्रभवति ॥

तदधुना युक्तिः क्रियते। प्रकाशम्। महाराज समाश्वसिहि समाश्वसिहि अस्त्युपायः कोऽपि भवन्मनोरथतरोः फलप्रसवाय।

राजा। जानासि चेदुच्यताम्।

सार्व्व। यद्यपि भवतोऽयमनुरागदूत एव तत्सङ्गमस्य कारयिता तथाप्यस्मद्युक्तिर्वर्त्तनी जीवनोपायो भवितुमर्हति।

राजा। उच्यतां का युक्तिः।

सार्व्व। जनान्तिकं केवलमनुरागमेव दूतं कृत्वाऽद्वितीय एव राजवेशं विहाय केनाप्यविदित एव भगवतो जगन्नाथदेवस्य रथोत्सववासरे नृत्यविनोदश्रममपनेतुं विजनमाराममवगाह्यमानमानन्दास्वादविरतवहिर्वृत्तिकमकस्मादुपेत्य विलोकयन्तु भगवन्तं भवन्त इति इतोऽन्यथा न तद्घटते।

राजा। साश्वासमपवार्य्य। एवमेव किन्तु यथेदं भवन्तं विना कोऽपि न जानाति तथा विधेयम्।

भट्टा। एवमेव। प्रविश्य दौवारिकः।

दौवा। देव राजधानीतः कश्चिदेकः सत्वरमुपसन्नोऽस्ति प्रणिधिः।

राजा। प्रवेश्यताम्।

दौवा। सत्वरं निष्क्रम्य तमादाय प्रविश्य च। देव अयमयम्।

राजा। प्रणिधे कथय सम्भ्रमस्य कारणम्।

प्रणि। देव।

परस्सहस्राः सहसैव पारे

चित्रोत्पलं ये मनुजाः समूढाः।
किं तैर्थिकास्ते परचक्रजाः किं
श्रुत्वैव कोलाहलमागतोऽस्मि ॥

सार्व्व। तैर्थिका एव अन्यथा पुरैव वार्त्ताऽभविष्यत् तदनुमीयते गौडीया एवैते भगवतः श्रीकृष्णचैतन्यस्य प्रियपार्षदाः। भवतु महत्येवासौ मधुरगोष्ठीगरिष्ठानां भविष्यति भगवता सह काऽपि गोष्ठी।

नेपथ्ये। कलकलः।

सार्व्व। महाराज सत्यमेवामी नरेन्द्रसरस्तीरं समायाता यदयमानन्दकोलाहलः श्रूयते।

राजा। सत्यमेवैतत्।

सार्व्व। महाराज यदि रोचते तदा वडभीमारुह्य पश्यन्तु कौतुकम्।

राजा। यथारुचितं भवते। इति वडभीमारुह्य पश्यानमवलोक्य च। सार्व्वभौम क एष भगवन्निर्माल्य-मालामादाय त्वरमाणस्तैर्थिकानामभिमुखं धावति।

सार्व्व। अयं दामोदरो भगवच्चैतन्यस्य प्रियपार्षदः। भगवता अद्वैतादिप्रियसुहृदामागमनं श्रुत्वा भगवत्प्रसादमालया पुरस्कृत्य तानेव समानेतुमयं प्रेषित इव लक्ष्यते।

राजा। एवमस्ति। कोऽपि तत्र भगवच्चैतन्यानुग्रहपात्रम्।

सार्व्व। अथ किम्। अन्यथा कथमेवं स्यात्। तदाज्ञापय गोपीनाथाचार्य्याङ्गनाय। तेनैव सर्व्वे परिचीयन्ते।

प्रविश्यापटीक्षेपेण।

आचार्य्यः। एषोऽहमस्मि तदाज्ञापयतु देवः किं विधेयमिति।

राजा। सार्व्वभौम आदिश।

सार्व्व। भवताऽमी सर्व्वे परिचीयन्ते तदस्मानपि प्रत्येकं परिचाय्यन्ताम्।

गोपी। वाढम्। इत्युपविशति। नेपथ्ये हरिसङ्कीर्त्तनध्वनिः।

सार्व्व। आकर्ण्य।

सङ्कीर्त्तनध्वनिरयं पुरतो विभक्त-
शब्दार्थ एव समभूच्छ्रवणप्रमोदी।
शब्दग्रहेण तदनन्तरमन्यरूपो
लब्धार्थ एव पुनरन्यविधो बभूव॥

राजा। निरूप्य। ईदृशं कीर्त्तनकौशलं क्वापि न दृष्टम्।

सार्व्व। इयमियं भगवच्चैतन्यसृष्टिः।

राजा। आचार्य्य यस्मै भगवन्मालामयमर्पितवानयं कः।

गोपी। कथयामि प्रत्येकम्। अयमद्वैतः। अयं नित्यानन्दः।

सार्व्व। अयं परिचीयते।

राजा। कथमसौ कतिचिज्जनैः सह पृथगायाति।

सार्व्व। सर्व्वादृतत्वादन्यसङ्गं नेहते।

गोपी। अयं श्रीवासः। अयमयं वक्रेश्वरः। अयमाचार्य्यरत्नः। अयमयं विद्यानिधिः।

सार्व्व। बाल्ये मया दृष्टावेतौ।

गोपी। अयं हरिदासः। अयमयं गदाधरः। अयं मुरारिः।

इमे श्रीवासस्य सहोदराः। अयं गङ्गादासः। अयं नृसिंहाचार्य्यः। इमे चान्ये नवद्वीपवासिनः। एते ममाप्यपूर्व्वाः। आज्ञा चेद्भवति तदा ज्ञात्वाऽऽगच्छामि।

राजा। तथैव क्रियताम्।

गोपी। यथारुचितं देवाय। इति सत्वरं परिक्रम्य नेपथ्याभिमुखी भूत्वा त्वरितं पुनः प्रविश्य च। सार्व्वभौम एष आचार्य्यपुरन्दरः। एष हरिभट्टः। एष राघवः। एष नारायणः। एष कमलानन्दः। एष काशीश्वरः। एष वासुदेवो मुकुन्दस्य ज्यायान्। अयं शिवानन्दः। एष च नारायणः। एष बल्लभः। एष श्रीकान्तः। किं बहुना सर्व्व एवामी श्रीचैतन्यपार्षदाः नैकोऽप्यत्र तैर्थिकः।

राजा। कथममी जगन्नाथालयं पृष्ठतः कृत्वा अग्रतश्चैतन्यकृष्णालयमेव प्रविशन्ति।

सार्व्व। एष एव नैसर्गिकस्य प्रेम्णो महिमा।

राजा। पुनरन्यतोऽवलोक्य। अये कथमयं वाणीनाथो रामानन्दानुजः सत्वरः प्रचुरतरैर्महाप्रसादान्नादिभिरुपसरति।

सार्व्व। हृदयज्ञोऽयं श्रीचैतन्यभगवतः तदनुक्त एव महाप्रसादैरुपचरितुमेतानुपसर्पति।

राजा। भट्टाचार्य्य।

"मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं विधिरिति"

वचनमुल्लङ्घ्यामी अद्य महाप्रसादमुरीकरिष्यन्ति।

सार्व्व। भट्टारक स खल्वन्यः पन्थाः। सा तु भगवतः

परोचिकी ह्याज्ञा इयन्तु साक्षात्कारिणो तत्रापि भगवता स्वहस्तेन प्रसादीक्रियमाणं जगन्नाथप्रसादान्नम्। अत्र का विप्रतिपत्तिः। तथा च

यदा यस्यानुगृह्णाति भगवानात्मभावितः।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम्॥ इति।

अपि च। तत्कर्म्म हरितोषं यदित्युक्तेरस्य तोष एवैषामुद्देश्यो न तीर्थयात्रा फलम्।

राजा। एवमेव। किन्तु कथय रथयात्रा कदेति। त्वदुपदिष्टो मन्त्र एव मे हृदि लग्नः। तदत्र निमिषमात्रोऽपि कालः कल्पायत इव मे।

सार्व्व। परश्वः।

राजा। कः कोऽत्र। भोः आहूयतां परीक्षामहापात्रं काशीमिश्रश्च।

प्रविश्य कश्चित्प्रणम्य। देव यथाऽऽज्ञापयसि। इति निष्क्रम्य तावादाय पुनः प्रविश्य च। देव सम्प्राप्तावेतौ।

राजा। महापात्र जगन्नाथदेवस्य यात्राविधौ भगवच्चैतन्यहृदयज्ञेनामुना काशीमिश्रेण यद्यदादिश्यते तदेव मदादेश इति ज्ञात्वा व्यवहर्त्तव्यम्।

महापा। यथाऽऽज्ञापयति देवः।

राजा। मिश्र त्वयाऽपि भगवच्चैतन्यचित्तानुवृत्तिरहरहरेव कार्य्या।

मिश्रः। मदीयमभीष्टमेवैतत्।

राजा। अपि च येऽमी यावन्तो गौडाः समायाताः सन्ति तेषामपि यथास्वाच्छन्द्येन भगवद्दर्शनं भवति तथा च विधेयम्।

उभौ। यथाऽऽज्ञा देवस्य। इति निष्क्रान्तौ।

राजा। भट्टाचार्य्य उपस्थत्य विलोकयेदमन्योन्यसम्भाषण-कौतूहलम्। सति तादृशेऽधिकारे मयेव तादृशपरमानन्द-भोगादवञ्चितेन कथं भवितव्यम्। अहमपि भविष्यद्रथविजयका-र्य्याकार्य्यपरिकलनायावहितो भवामि। इति निष्क्रान्तः।

सार्व्व। ममाभीष्टमेव नरपतिरादिष्टवान्। तदधुना तथैव करोमि। इति गोपीनाथाचार्य्येण कतिचित्पदानि गत्वा। अहो पुरतः।

आनन्दहुङ्कारगभीरघोषो
हर्षानिलोल्लासिततारडवोर्म्मिः।
लावण्यवाद्धी हरिभक्तिसिन्धु-
स्तलः स्थिरं सिन्धुमधः करोति॥

तदुपसर्पाव। इत्युपसर्पतः।

ततः प्रविशन्ति उक्तप्रकारा सर्व्वे अद्वैतप्रमुखाः।

अद्वै। पुरोऽवलोक्य। दामोदर पुनर्मालान्तरं गृहीत्वा कोऽयमायाति।

दामो। अयं भगवत्पार्श्ववर्त्ती गोविन्दः। प्रविश्य सत्वरं गोविन्दो मालामर्पयति।

अद्वै। सादरं गृह्णाति।

दामो। इदमिदं काशीमिश्राश्रमपदं तत् प्रविशन्तु। अद्वैतादयः प्रवेशं नाटयन्ति।

सार्व्व। अहो आश्चर्य्यम्।

युगान्तेऽन्तःकुक्षेरिव परिसरे पन्नवलघोरमी
सर्व्वं ब्रह्माण्डकसमुदयादेव वपुषः।
यथास्थानं लब्धाऽवसरमिह मान्ति स्म शतशः
सहस्रं लोकानां वत लघुनि मिश्राश्रमपदे॥

पुरोऽवलोक्य। अये अयमसौ।

अद्वैतेन्दोरुदयजनितोल्लाससीमातिशायी
श्रीचैतन्यामृतजलनिधेरिङ्गतीवोत्तरङ्गः।
पूर्णानन्दोऽप्ययमविकृतः शश्वदुच्चैरखण्डः
खण्डानन्दैरपि कथमहो भूयसीं पुष्टिमेति॥

ततः प्रविशति यथानिर्द्दिष्टः श्रीचैतन्यः पुरीश्वरस्वरूपादयश्च।

श्रीचै। उपसृत्य नित्यानन्दं प्रणम्याद्वैतं परिष्वजते।

अद्वै। प्रतिपरिष्वजते।

सार्व्व। निरूप्य।

प्रेमारण्यकरीन्द्रयोरिव मिथः प्रेम्णा मदोत्सिक्तयो-
रन्योन्यं करघट्टनाचटुलयोस्तारस्वरं गर्ज्जतोः।
अन्योन्यं गलदश्रुदानपयसा संसिक्तयोरेतयो-
रन्योन्यं परिरम्भ एष जयतादद्वैतचैतन्ययोः॥

सर्व्वे। इतस्ततो भुवि दण्डवन्नमन्ति।

भगवान्। सर्व्वानेवालिङ्गनसम्भाषणदर्शनादिभिरनुगृह्णाति।

अद्वै। अदृष्टपूर्व्वान् परिचाययति।

श्रीचै। अदृष्टपूर्व्वानपि तान् स्वयमेव नामग्राहं सम्बोधयति।

गोपी। अहो अतिचित्रम्।

क्षेमं ते राघव ननु शिवं वासुदेव प्रियं ते
कच्चिद्धो नारायण ननु शिवानन्द कल्याणमास्ते।
भव्यं हे शङ्कर नु कमलानन्दकाशीश्वरौ वां
भद्रं श्रीकान्त तव कुशलं स्वस्ति नारायणस्य॥

अपि च। इति प्रियोक्त्या मधुरार्द्रया शनै-
रदृष्टपूर्व्वानपि दृष्टवत् प्रभुः।
सम्बोधयत्येष किमीशताऽथवा
प्रेमैव वा प्राक्तन एष सर्व्ववित्॥

श्रीचै। अद्यायं मे समजनि महानुत्सवः श्वः परश्वो
वान्यो नीलाचलशशधरस्योत्सवो गुण्डिचाख्यः।
तुल्यौ यद्यप्यहह हृदयानन्दनिस्यन्दहेतू
यत्त्वाद्वैतप्रकटनमसावुत्सवो मे प्रमोदो॥

इति प्रत्येकमद्वैतादीन् भगवज्जगन्नाथप्रसादमालाचन्दनाभ्यां भूषयित्वा श्रीहस्तेन प्रसादान्नं किञ्चित् किञ्चिद्ददाति।

सार्व। न मयेदानीमुपसर्त्तव्यम्। मामवलोक्य रसान्तरं भवितुमर्हन्ति। गतप्रायमेवैतद्दिनद्वयं यात्रायाः सामग्रीसमवधानाय राज्ञा नियुक्तोऽस्मि। तदधुना तत्रैव गच्छामि। आचार्य्य त्वमत्रैव तिष्ठ। इति निष्क्रान्तः।

गोपी। उपसृत्य। जयति जयति महाप्रभुः।

श्रीचै। कथमाचार्य्योऽसि एहि प्रणमाद्वैतम्।

गोपी। तथा करोति।

अद्वै। आलिङ्ग्य। जानामि भवन्तं विशारदस्य जामातारम्।

श्रीचै। स्वत एव मद्भक्ततरोऽयम्।

आचा। वाणीनाथेन सह युक्त्या सर्वेषामवस्थानं कल्प्यताम्।

गोपी। यथाऽऽज्ञापयति भगवान्। इति निष्क्रान्तः।

श्रीचै। वासुदेव यद्यपि मुकुन्दो मे प्राक्सहचरस्तथाऽपि त्वमद्य दृष्टोऽपि अतिप्राक्प्रियतमोऽसि।

वासु। सदैन्यम्। भगवन् क्वाहं वराको मुकुन्दस्तु तवानुगृहीत एव चिरं तेन ईश्वरानुग्रहकालस्य। जन्मतया कनीयानप्यसौ मम ज्यायानेव।

श्रीचै। शिवानन्द त्वमप्यतीव मय्यनुरक्तोऽसीति जानामि।

शिवा। निमज्जतोऽनन्तभवार्णवान्त-
श्चिराय मे कूलमिवासि लब्धः।
त्वयाऽपि लब्धं भगवन्निदानी-
मनुत्तमं पात्रमिदं दयायाः॥

इति भूमौ निपतति।

श्रीचै। राघव त्वमतिप्रेमपात्रमसि मे।

राघ। अनुत्तरेणैव प्रत्युत्तरयन् प्रणिपतति।

श्रीचै। स्वरूप यद्यप्ययं शङ्करो दामोदरानुजस्तथाऽपि मे।

इत्यर्द्धोक्ते दामोदरं निरीक्षते।

दामो। नाथ ममेदमतिसौभाग्यमेतत्। अयं समाप्यतां वाक्शेषः।

श्रीचै। दामोदरे सादरः स्नेहः। अत्र तु निरवकरं।

प्रेम। तदयमत्रैव भवत्समीपे तिष्ठतु। गोविन्द त्वयाप्यानुकूल्यं विधेयम्।

उभौ। यथाऽऽज्ञापयति देवः। प्रविश्य सत्वरम्।

गोपी। स्वामिन् यथाऽऽज्ञमेव सर्व्वं सुसम्पादितं विशेषतो गदाधरस्य यमेश्वरस्य समीपे समीचीनमेव स्थलं सार्वकालिकं जातमस्ति।

श्रीचै। अद्वैत अयं द्वितीयो मुनीन्द्र इव पुरीश्वरः। यः किल तव गुरोः प्रियशिष्यः। तदेनं प्रणम।

अद्वै। तथा करोति। सर्व्वे तथैव प्रणमन्ति।

श्रीचै। आचार्य्याद्वैत अयमयं स्वरूपः। स्वं रूपमस्यास्तीति निरुक्तेरविक्कृत एवायं मम हृदयमेवायमिति जानीयाः।

अद्वै। एवमेव। इति प्रणमति सर्व्वे प्रणमन्ति।

गोपी। भगवन्नाज्ञाप्यताममीषां विश्रामाय।

श्रीचै। आचार्य्य स्वयमेवोच्यतां याहीति मया कथं वक्तव्यम्।

अद्वैतादयः। इङ्गितं बुद्धा निष्क्रान्ताः।

श्रीचै। स्वामिन् पुरीश्वर प्रणयिन् स्वरूप अद्याहं पूर्णोऽस्मि।

स्वरू। स्वामिन्।

ईश्वरः स्वेन पूर्णोऽपि पार्षदैरेव पूर्य्यते।
पूर्णोऽपि रजनीनाथो रिक्त एवांशुभिर्विना॥

तदा गच्छन्तु सायाह्नो जातः भवन्तमन्तरेण पुरीश्वरोप्यकृतभिक्ष एव।

श्रीचै। एवमेव। इति निष्क्रान्ताः।

नेपथ्ये। श्रुतश्रुतिरपि श्रुतिहीनः सहस्रनयनोऽपि परमान्धः।
नीलगिरीन्दुस्यन्दनयात्रासन्दर्शनोत्कण्ठ्यात्॥

गोपी। आकर्ण्य। अहो मुहूर्त्तमिव गतं दिनद्वयम्। यदयं रथयात्राप्रसङ्गो भट्टाचार्य्येण प्रस्तूयते तन्निभालयामि। इति कियद्दूरं गत्वा। अहो चित्रम्।

मूर्त्तास्त्रय इव वेदाः शम्भोस्त्रीणीव नयनानि।
तिस्र इवामरसरितो धाराः पुरतो रथत्रयी स्फुरति॥

पुनर्नेपथ्ये।

आयातोऽद्य रथोत्सवस्य दिवसो देवस्य नीलाचला-
धीशस्याद्य पुरो नटिष्यति निजानन्देन गौरो हरिः।
विश्रान्तिं नटनावसानसमये कर्त्ताद्य जातीवने
हन्ताद्यैव मनोरथः सफलतां यास्यत्ययं मादृशः॥

गोपी। अहो गजपतेर्महाराजस्यालाप इव श्रूयते तदवधातव्यमवश्यमिदम्। इति निरूप्य। सत्यमेवायं भट्टाचार्य्येण सह सङ्कथयन्नुत्कण्ठते महाराजः। पश्यामि को विलम्बो जगन्नाथरथारोहणस्य। इति पश्यति। नेपथ्ये कोलाहलादिनिर्घोषः।

गोपी। निरूप्य। अहो।

हृदयमिव महः समाधिभाजा-
मुदयगिरेरिव शीर्षमुष्णरश्मिः ।
अयमखिलदृशां रसायनश्री-
रथमधिरोहति नीलशैलनाथः ॥

पुनर्निरूप्य ।

अद्वैताद्यैरखिलसुहृदां मण्डलैर्मण्ड्यमानो
गायद्भिस्तैः कतिभिरपरैः श्रीस्वरूपप्रधानैः ।
श्रीमद्वक्रेश्वरमुखसुखाविष्टभूयिष्ठबन्धुः
सिन्धुः प्रेम्णामयमिह नरीनर्त्ति गौरो यतीन्द्रः ॥

नेपथ्ये कलकलः ।

गोपी । सहर्षम् ।

गौडाख्यैरथ कर्षिभिर्जनचयैरादाय वामे करे
हेलोल्लासितपीनरज्जुपटली सङ्कर्षणव्याजतः ।
स्थायंस्थायमहो क्वचिद्द्रुततरं धावत्यमन्दं क्वचि-
द्धावंधावमहो स्थितः स्थिरतरं स्वेच्छावशः स्यन्दनः ॥

पुनर्नेपथ्ये सङ्कीर्त्तनकोलाहलः ।

गोपी । आलोक्य सकौतुकम् ।

प्रचलति जगन्नाथे गौरोऽपसर्पति सम्मुखात्
स्थितवति जगन्नाथे गौरः प्रसर्पति तत्पुरः ।
अतिकुतुकिनावेवं देवौ परस्परमुत्सुकौ
कलयत इव क्रीडां नीलाचलेन्द्रमुनीश्वरौ ॥

पुनर्निभाल्य । अहो ।

स्थितवति बलगण्डीमण्डपस्योपकण्ठं
भगवति जगदीशे शान्तनृत्यो यतीन्द्रः।
उपवनमनुगच्छन् पार्षदैः प्रेमवद्भिः
सहजयति नितान्तश्रान्तितो विश्रमाय॥

तदधुना नरपतिनाऽपि गूढवेषेण तत्राभिसर्त्तव्यमिति भट्टाचार्य्यस्येङ्गितेन ज्ञातमस्ति तदहमपि सत्वरमुपसर्पामि। इत्युपसर्पति।

ततः प्रविशतिन्त्यानन्दानुभवनिस्पन्दो निमीलितनयनो नयनाभिराम उपवनमण्डपमध्यास्य प्रसार्य्यमाणलोलचरणकमलनालदण्डयुगलो गलल्लोचनजलधौतवक्षाः साक्षादिव प्रेमानन्दः श्रीकृष्णचैतन्यः प्रतितरुमूलमेकैकमुपविष्टास्तूष्णीकाः पार्षदाश्च।

भगवान्। अथात आनन्ददुघं पदाम्बुजं
हंसाः श्रयेरन्नरविन्दलोचन।

इति श्लोकार्द्धमेव भूयो भूयः प्रमीलितनयन एव पठति।

गोपी। आलोक्य। अहो प्रेमानन्दास्वादमहिमा देवस्य। अनुभूतस्य नृत्यकालीनभगवत्कृष्णसाक्षात्कारानन्दस्य ब्रह्मानन्दतोऽपि चमत्कारकारणत्वं चर्व्वणयास्वादयति। अथेति उच्चावचशास्त्रसकलप्रतिपाद्यावबोधपरिसमाप्तौ अत इति ब्रह्मानन्दादपि चमत्कारकारकत्वात्। हंसाः सारासारविवेचकचतुराः पादाम्बुजं श्रयेरन्। कुतः आनन्ददुघमिति स्वानुभूतानन्दमाहात्म्यसूचनमिदम्। परितोऽवलोक्य। अहो इत एव सर्व्वे परमभागवताः। तथा हि

निःस्पन्दमुज्ज्वलरुचः सुशिखाः सुपूर्ण-
स्नेहास्तमःक्षयकृतः प्रतिशाखिमूलम् ।
आभान्ति शोभनदशास्त इमे महान्तो
निर्वातमङ्गलमहोत्सवदीपकल्पाः ॥

भवतु अत्रैव क्वापि निभृतमुपविश्य राज्ञः प्रवेशं प्रतिपालयामि । इति तथा करोति ।

ततःप्रविशति त्यक्तराजवेशः परिहितधौतवसनयुगलो राजा ।

राजा । सोत्कण्ठम् ।

उत्कण्ठा भयतर्कयोर्बलवतोराच्छादनं कुर्व्वती
मामुच्चैस्तरलीकरोति चरणौ हा धिक् कथं स्तम्भुतः ।
हंहो दैवपरीक्षयाद्य भवतः प्रायः परीक्षा मम
प्राणानामपि भाविनो नहि मम प्राणेषु कोऽपि ग्रहः ॥

इति शनैः शनैः परिक्रामति ।

गोपी । राजानं निर्वर्ण्य । अहो चित्रम् ।

प्रभावमात्रैकनृदेवचिह्नो
वीरो रसः सुप्त इवायमग्रे ॥
आनन्दशङ्काभयतर्कमिश्रः
कृच्छ्रेण विन्यस्यति पादपद्मम् ॥

परितः सर्व्वे आत्मगतम् । अहो मङ्गलछत्रमुद्रितकरोऽयं राजा प्रतापरुद्रः कथमयं गृहीततपस्विविप्रवेशोऽकस्मादुपसर्पति स्वामिनामुद्वेगो भावी । तदवलोकयाम किमयं करोति इति ।

राजा। शनैरितस्ततोऽवलोकयन् सहसैवोपसृत्य दोलायमानं भगवच्चरणकमलयुगं परिघदीर्घाभ्यां दोर्भ्यां दृढतरमालिङ्गति।

सर्व्वे। आलोक्य। अहो महानयमनर्थः। निमीलन्नयनकमलेन स्वानन्दावेशविवशेन भगवताऽयमलक्षित एव। यद्भगवच्चरणौ दधार तदस्य न विद्मः किं भावि।

भगवान्। स्वानन्दस्थ एव निमीलिताक्ष एवानिभालनेनैव गाढं परिष्वज्य।

को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम्।
न भजेत्सर्व्वतोमृत्युरुपास्यममरोत्तमैः॥

इति पुनः पुनः पठति।

गोपी। अहो कौतुकम्।

साहसं क्व च गुणाय कल्पते
क्वापि दूषणतया च सिध्यति।
साहसेन यदकारि भूभुजा
तत्तपोभिरखिलैश्च नाऽऽप्यते॥

पुनर्निभाल्य।

महामल्लैर्यस्य प्रकटभुजवक्षःस्थलतटी-
विनिष्पेषोद्भग्नास्थिभिरिव विदध्रे विकलता।
स एवायं माद्यत्करिवरकराक्रान्तकदली-
तरुस्तम्भाकारो भवति भगवद्बाहुदलितः॥

नेपथ्ये कलकलः।

भगवान्। राजानं परित्यज्य तत्कलकलाकलितरथप्रस्थानसत्वरः पुनर्जगन्नाथदिदृक्षया तथाविधसानन्दस्य एव निष्क्रामति।

सर्व्वे। यथायथं तमनु निष्क्रामन्ति।

गोपी। उपसृत्य। महाराज जगन्नाथदर्शनार्थं गतो देवः। सम्प्रति भवन्तोऽपि चलितुमर्हन्ति। इत्यानन्दतन्द्रितं राजानमादाय निष्क्रान्तः। इति निष्क्रान्ताः सर्व्वे।

प्रतापरुद्रानुग्रहो नामाष्टमोऽङ्कः॥

---

## नवमाङ्कः।

ततः प्रविशति किन्नरमिथुनम्।

पुरुषः। प्रिये गतागतेभ्योऽपि सम्वत्सरेभ्यः खलु जगन्नाथस्य गुण्डिचोत्सवः परमरमणीयो दृष्टः।

स्त्री। कथम्बिअ (१)।

पुरु। अस्मिन्नब्दे तु मूर्त्तिमतानन्देनैव कनकगिरिगौरेण यतीन्द्रवेषधारिणा भक्तावतारेण श्रीकृष्णचैतन्येन महोत्सवोऽयं सुरसत्वेन परमरमणीयो विहितः।

स्त्री। हद्धी हद्धी अहं कधं सङ्गे ण णीदा। मए दट्ठु ण पारिदं (२)।

पुरु। प्रिये आगामिन्यब्दे दर्शनीयो भवत्या।

---

१ कथमिव।

२ हा धिक् हा धिक् अहं कथं सङ्गे न नीता। मया द्रष्टुं न प्राप्तम्।

स्त्री। आआमिणि अद्दे जइ एव्वं होइ (१)।

पुरु। इतः प्रभृति तेनात्रैव स्थातव्यम्।

स्त्री। एत्थ को णिअमो (२)।

पुरु। जानामि तत्त्वम्।

स्त्री। कधं जाणीदं (३)।

पुरु। परस्परं कथयतां तज्जनानां तज्जनानाश्चित्तचरित्रविदां कथयैव।

स्त्री। केरिसी सा कहा (४)।

पुरु। प्रिये श्रूयताम्। अस्य त्रिविध एव लोकानुग्रहप्रकारः।

स्त्री। केरिसो तिसविहो (५)।

पुरु। एकः साक्षात्कारी। द्वितीयः परहृदयप्रवेशलक्षणः। तृतीयश्चिन्तनमात्राविर्भावरूपः।

स्त्री। विवेइअ कहेहि (६)।

पुरु। ये खलु पुरुषोत्तमक्षेत्रागमनसमर्थास्तेषां साक्षात्कारी। तथा हि प्रतिसम्वत्सरं सरंहसो नानादेशतः सर्व्वं जगन्नाथदर्शनतोऽपि तद्दर्शनबद्धोत्कण्ठा अदृष्टपूर्व्वा अश्रुतपूर्व्वाः परस्सहस्राः प्राणिन उपतिष्ठन्ति।

---

१ आगामिनि अब्दे यदि एवं भवति।
२ अत्र को नियमः।
३ कथं ज्ञातम्।
४ कीदृशी सा कथा।
५ कीदृशस्त्रिविधः।
६ विवृत्य कथय।

स्त्री। तदो तदो (१)।

पुरु। ततस्तेषु गौडीयाः प्रिया गौडीयानां मध्ये येऽतिप्रियाः शतशो दृष्टवन्तस्तेऽप्यदृष्टवन्तोऽपि प्रभुभाद्दृष्टवन्तो यथा अमी। नरहरिरघुनन्दनप्रधानाः कति च न खण्डभुवोऽप्यखण्डभाग्याः। प्रथममिममदृष्टवन्त एते प्रतिशरदं पुरुषोत्तमं लभन्ते।

कुलीनग्रामीणा अपि च गुणराजान्वयभुवो
जना रामानन्दप्रभृतय इमे देवसुहृदः।
तथान्यायाचार्य्यादय उपचितप्रेमसरसा
महाविद्वांसोऽमी प्रतिशरदमात्रोपगमिनः॥

भगवन्नाम न्यायाचार्य्यस्तु पुरुषोत्तम एव भगवच्चैतन्यदर्शनाकाङ्क्षी यावज्जीवं स्थितः। एवमेषां साक्षादनुग्रहः।

आगमनासमर्थानान्तु परहृदयमारुह्यानुग्रहः क्रियते।
हृदयारोहयोग्यास्तु अद्वैतनकुलब्रह्मचार्य्यादयः।

स्त्री। किञ्चि कधेहि (२)।

पुरु। अद्वैतारोहवार्त्ता तु प्रथीयसी तत्कथनं बहुकालसाध्यम्। नकुलब्रह्मचारिहृदयारोहः श्रूयताम्।

स्त्री। कधेहि अवहिदम्हि (३)।

पुरु। अस्ति कश्चित् अम्बुग्रामे परमवैष्णव आजन्मब्रह्म-

---

१ ततस्ततः।
२ किञ्चित्कथय।
३ कथय अवहिता स्मि।

चारी नकुलो नाम। तस्यै कस्मिन् दिवसे ग्रहग्रस्तस्येव कस्या-मपि दशायामुत्पन्नायां आनन्दाश्रुपुलकनिर्भरस्य दर्शनमा-त्रेणैव सर्व्वेषां हृदयकुहरे श्रीचैतन्यावेशोऽयमस्य जात इति प्रत्ययमुत्पादयत एव कतिचिदहोरात्रा गताः।

स्त्री। तदो तदो (१)।

पुरु। तदनु।

गौरत्विषा कपिशयन् ककुभः समन्ता-
दानन्दभोगपरिलोपितवाह्यवृत्तिः।
आबालवृद्धतरुणैरथलक्षसङ्ख्यै-
र्लोकैरभूत् प्रणयिभिः परिपूज्यमानः॥

स्त्री। तदो तदो (२)।

पुरु। ततो दैवात्तस्मिन् काले तत्रागतेन भगवच्चैतन्यपा-र्षदेन शिवानन्देन तमुदन्तमत्यन्तसन्दिह्यमानतयाऽऽत्य दि-दृक्षुणा मनसि कृतं अहो किमेतस्य दर्शनेन साक्षादेव मया दृष्टोऽस्ति भगवान्। तदा लोकसुखसदृशं किमस्य दर्शनेन भविष्यति सुखं नैवेति निवर्त्तमानेन पुनर्मनसि कृतम् अहो यद्ययं सर्व्वलोकवहिर्वर्त्तमानं मां स्वयमेवाहूय स्वसमीपं नीत्वा मामकमिष्टमन्त्रं प्रख्यापयति तदा सत्यमेवात्र तस्या-वेशो जात इति चिन्तयित्वा प्रसारिणो जनसमूहस्य वहिः स्थितवति शिवानन्दे यावदावेशं तूष्णीं स्थितोऽप्यसौ कः को-

---

१ ततस्ततः।

२ ततस्ततः।

ऽत्र भो दूरे वर्त्तमानः शिवानन्द आहूयतामिति निर्देशमात्रेण धावद्भिरेव कतिभिरितस्ततो नामग्राहं विचिन्वद्भिरतिदूरे स्थितं तमादाय तन्निकटमाययौ। अनन्तरञ्च तेन शिवानन्द भवता मनसि विचारितं यत् तदाकर्ण्यतां भवदीय इष्टमन्त्र-श्चतुरक्षरो गौरगोपालदेवताकः। इत्याकलय्य तेन निर्णीतं सत्यैवेयं प्रथेति।

स्त्री। अज्जउत्त त्तीत्तओ कोरिसो (१)।

पुरु। तृतीयस्तु चिन्तनमात्राविर्भावो यः सोऽपि श्रूयताम्। एकदा तस्यैव शिवानन्दस्य भागिनेयः श्रीकान्त एकक एव प्रथमं श्रीपुरुषोत्तममागत्य भगवच्चैतन्यचरणौ ददर्श। अ-स्मिन्नेव समये कौतुकवशात् पुरीश्वरस्वरूपादिसमक्षं भगवता किञ्चिज्जगदे। जगदेकबन्धुना श्रीकान्त अस्मिन्नब्दे अद्वैता-दयो दयोद्धुरा वक्तव्यास्ते यथा नायान्ति मयैव तत्र गन्त-व्यमिति। अपि च शिवानन्दोऽपि भगवन्मातुलो वक्तव्यः पौषे मासि तत्रोपसन्नेन मया भवितव्यम्। तत्र जगदानन्दो-ऽस्ति तत्रैव भिक्षा कर्त्तव्येति निवृत्तेन श्रीकान्तेन भगवत्सन्देशे कथिते सति सर्व्वेऽद्वैतादयश्चलनोद्यमाच्छिथिलीबभूवुः। शि-वानन्दस्तु भगवदागमनमभिनिलषिषुर्भगवद्भिक्षायामिदं ल-गिष्यतीति कृत्वा भगवत्प्रियत्वेन वास्तूकवास्तुकदलीगर्भो-त्थाकनिशादिसामग्रीसमवधानाय स्थितवान्।

---

१ आर्यपुत्र तृतीयः कीदृशः।

स्त्री । तदो तदो (१) ।

पुरु । ततो दैवाद् गोदावरीतः समायातेन रामानन्दरायेणोपबोधितो भगवान् न गन्तुमीष्टे ।

स्त्री । तदो तदो (२) ।

पुरु । ततोऽसौ शिवानन्दः श्रीनृसिंहानन्दब्रह्मचारीति प्रथितं परमयोगीन्द्रं साक्षान्नृसिंहमिव प्रद्युम्नब्रह्मचारित्वेन पूर्व्वंख्यातावपि भगवतैव नृसिंहोपासनासिद्धत्वेन नृसिंहानन्द इति कारितसञ्ज्ञं समये समुवाच। स्वामिन् आयास्यामीति कृत्वा भगवान्नायातः । वास्तूकशाकमवलोक्य मनोदुःखमेव जायते ।

स्त्री । तदो तदो (३) ।

पुरु । ततस्तेनोक्तम् । मयैवानेतव्यो दिनद्वयमपेक्षतामिति तत्प्रभावज्ञोऽसौ तथैव श्रद्दधे। स च नृसिंहानन्दो नृसिंहानन्दोऽपि तं समयमारभ्य समाधिस्थो दिनद्वयान्तरे शिवानन्दमाहूय अये भगवच्चैतन्यो राघवालये समानीतोऽस्ति। प्रातरत्रागमिष्यति मयैव पक्तव्यं भिक्षा च दातव्येति श्रुत्वा तस्मिन्नपि तथोद्युक्ते सति स्वयमुषसि कृतस्नानः शुचितरो भूत्वा पाके प्रवृत्तः स्वेच्छापूर्व्वं यथेष्टमेव पेचितवान्। अनन्तरं तस्मिन्नेव समये श्रीचैतन्यस्य जगन्नाथस्य नृसिंहस्य च पृथक् त्रयो भोगा विभज्य निष्पादिताः। अनन्तरं तत्तन्नाम्ना समर्प्य

---

१ ततस्ततः ।
२ ततस्ततः ।
३ ततस्ततः ।

वहिर्भूय निमीलितचक्षुरान्तरेण चक्षुषा पश्यति त्रीनेव भोगानेक एव भगवान् भुङ्क्ते। अनन्तरं सञ्जातमहानन्दो गलदश्रुधारः सारवमुच्चैः प्रणयामर्षकृताक्षेपमिव भद्रं भो भद्रं जगन्नाथेन सह तवैक्यमतो जगन्नाथस्य भोगो भुज्यतां नाम मम नृसिंहस्य भोगः कथं भुज्यते नृसिंहोऽद्य मयाऽयमुपोषित इत्युच्चैराक्रन्दन् शिवानन्देनोक्तं स्वामिन् कथमाक्रुश्यते इति।

स्त्री। तदो तदो (१)।

पुरु। ततस्तेनोक्तम्। तव गोस्वामिना चैतन्येन भोगत्रयमेव भुक्तं नृसिंहस्योपवासो जात इति।

स्त्री। तदो तदो (२)।

पुरु। ततः शिवानन्देनोक्तम्। स्वामिन् नृसिंहार्थमन्या भोगसामग्री कर्त्तव्येति। तथाकृते स्वस्थो बभूवेति स्थिते शिवानन्दस्य संशयो जातः। किमनेनावेशवशादेवोक्तमथवा सत्यमेवेति मनसि कृत्वा पुनरन्यस्मिन् संवत्सरे पुरुषोत्तममासाद्य भगवच्चैतन्यसविधे गतः। प्रसङ्गतो नृसिंहानन्दस्य तन्महिमकथनेऽवान्तरभूता पाकक्रिया तस्यातिसमीचीनेत्यपि वदति भगवति सर्व्वेषु सन्दिहानेषु मया गते सम्बत्सरे पौषे मासि तस्य भिक्षा कृता। तत्र तस्य पाककौशलं ज्ञातमित्युक्ते पुनः सर्व्वे सन्दिग्धा एव स्थिताः। शिवानन्दस्तु निःसन्देहो बभूवेति व्याख्यातस्ते त्रिविधोऽनुग्रहप्रकारः।

---

१ ततस्ततः।
२ ततस्ततः।

स्त्री। अच्चरिअं अच्चरिअं। ता एदंपि कधेहि रामाणन्देण कहं तत्थ गन्दुं णिसेहो किदो (१)।

पुरु। प्रिये स तावद्भगवतोऽतिप्रणयी तद्विच्छेदं न सहते। तेन तदुपरोधान्मथुरां जिगमिषुरपि वर्षद्वयमद्यस्व इति कृत्वा विलम्बितो भगवान्।

स्त्री। अदो वरं एत्थज्जेव वट्टिस्सदि अहवा मडुरां गमिस्सदि (२)।

पुरु। प्रिये अधुना तु चिरमनुनीय तमेव रामानन्दं तेनानुमतं गौडवर्त्मन्येव गन्तुमुद्यतोऽस्ति।

स्त्री। अज्जउत्त पुणो एत्थ आअमिस्सदि (३)।

पुरु। अथ किम्।

स्त्री। एत्थ अत्थि सन्देहो। जदो मडुरा क्खु एदस्स पिअट्ठाणं (४)।

पुरु। यद्यप्येवं तथापि।

आपामरं प्राणिन उद्दिधीर्षी-
र्नीलाचलेन्दोरतिभारमेतम्।
लघूकरिष्यन् पुरुषोत्तमस्थो
भूयोऽपि भावी पुरुषोत्तमोऽयम्॥

---

१ आश्चर्यमाश्चर्यम्। तदिदमपि कथय। रामानन्देन कथं तत्र गन्तुं निषेधः कृतः।

२ अतः परमत्रैव स्थास्यति अथवा मथुरां गमिष्यति।

३ आर्यपुत्र पुनरत्रागमिष्यति।

४ अत्र अस्ति सन्देहः। यतो मथुरा खलु अस्य प्रियस्थानम्।

स्त्री। आं होइ एवं होइ (१)।

नेपथ्ये। भट्टाचार्य्य कथं रामानन्देनास्मिन् कर्म्मणि कृताऽनुमतिः।

पुरु। प्रिये श्रुतमिदं यदभिहितं मया तदेवाधुना तद्विच्छेदविधुरो गजपतिरपि सार्व्वभौमेन सह सङ्कथयन्नास्ते। तदावामपि भगवन्तं नीलाचलचन्द्रं गानेनोपस्थातुं गच्छाव।

इति निष्क्रान्तौ।

प्रवेशकः। ततः प्रविशत्यासनस्थो राजा सार्व्वभौमश्च।

राजा। भट्टाचार्य्य रामानन्दस्याग्रहपाशग्रन्थिशैथिल्येनैव भगवान् ग्रथितः।

सार्व्व। ईश्वरेण सार्द्धं किमधिको हठः कर्त्तुं शक्यते। तथापि वर्षद्वयमेव विलम्बितः।

राजा। भट्टाचार्य्य रामानन्देन मे महानेवोपकारः कृतः। तथा हि।

आनीतो राजधान्याः पथि पुरुकरुणः कारितं चेक्षणं मे
स्पर्शः पादाम्बुजस्य व्यधित मम दुरापोऽपि सम्यक् सुखापः।
वाक्पीयूषञ्च सानुग्रहमतिमधुरं पायितं श्रोत्रपेयं
यन्नाभूद्भूरियत्नैस्तदजनि सहसा शून्यमन्तस्तथाऽपि॥

सार्व्व। महाराज रामानन्दो हि भागवतोत्तम एव। तथा हि। प्रणयरसनया धृताङ्घ्रिपद्मः
स भवति भागवतप्रधान उक्तः।

---

१ आं भवति एवं भवति।

तेनास्य भगवान् वश एव अतस्तदुपरोधेन भगवता त्वय्येतादृशोऽनुग्रहः कृतः।

राजा। रामानन्देन कियद्दूरमनुव्रजितव्यम्।

भट्टा। भद्रकपर्य्यन्तमिति श्रुतम्।

राजा। स्वामिनः सङ्गे कियन्तश्चलिताः।

सार्व्व। पुरीश्वर-दामोदर-जगदानन्द-गोपीनाथ-गोविन्दाद्याः पञ्चषा एव।

राजा। हन्त।

यदपि जगदधीशो नीलशैलस्य नाथः
प्रकटपरमतेजा भाति सिंहासनस्थः।
तदपि च भगवच्छ्रीकृष्णचैतन्यदेवे
चलति पुनरुदीचीं हन्त शून्या त्रिलोकी॥

सार्व्व। राजन् निरुपधिप्रेम्णो ह्यीदृशः प्रकाशः।

राजा। अस्मदीयः कोऽपि न गतः प्रभोरनुपदम्।

सार्व्व। राजन् प्रेम्णैवेदमुच्यते क तस्य त्वदीयजनापेक्षा। तथापि तवाधिकारं यावत् तव लेखमादाय पूर्व्वमेव कश्चिद्गतोऽस्ति करिष्यति च स एव सर्व्वसमाधानम्।

प्रतिवसति नवीना वासमग्रे विधाय
प्रतिगृहमुपचारैर्भूरिभिः पूरयित्वा।
कृतसुरचनमुच्चैस्तत्र तत्राभियुक्तैः
पदविहरणखेदं धुन्वते ते विश्रान्तः॥

भगवांस्तु रामानन्दस्य कृतिरियमित्येव जानाति। प्रविश्य।

दौवारिकः। देव रामानन्दरायो द्वारमधितिष्ठति।

राजा। त्वरितमानीयताम्।

दौवा। यथाज्ञापयति। इति निष्क्रम्य तमादाय प्रविशति।

राजा। उपसृत्य प्रणमति।

रामा। सादरमुपवेश्य। कथय कियद्दूरं भवाननुगतो-देवम्।

रामा। इत इतो निवर्त्तस्वेति प्रतिपदमुक्तोऽपि भद्रकपर्य्यन्तमनुगतवानस्मि। महाराज दुस्त्यजो हि व्यवहारमार्गः। यतः

तमपि परमदीनोद्धारिकारुण्यसिन्धुं
शिव शिव परिहाय त्वद्भियैवागतोऽहम्।
कथमहह न जातस्तत्र मे देहपातः
कुलिशकठिनमूर्त्तेर्हा यतोऽहं निवृत्तः॥

इत्यश्रूणि मुञ्चति।

सार्व्व। रामानन्द त्वमतिधीरोऽसि कथमेवमुत्ताम्यसि ईश्वरो हि तथाविधलील एव। व्रजवासिनो विहाय मथुरां गतः पुनस्ततोऽपि द्वारवत्यां पुनस्ततोऽपि क्वचित् क्वचित्। तत्रत्याः कथं सहन्तस्म तद्विरहम्। यद्यपि दुःसह एव भगवद्विरहस्तथाऽपि स एव तं साहयते तदलमनुशोचनेन। राजानमधुना सान्त्वयितुमर्हसि न पुनः स्वखेदप्रकटनेन खेदयितुम्।

राजा। कथय।

रामा। भवदधिकारं यावद्भवदीया एव गच्छन्ति तदूर्द्ध्वं मदीयाः पथि प्रज्ञा एव गौडराष्ट्रं यावद्यास्यन्ति केचित्तेषां

क्रियद्दूरत एवागमिष्यन्ति केचित् दूरतरं यास्यन्ति।

प्रविश्य। दौवारिकः। देव महाप्रभुमनुव्रजन्तो ये रायस्य मनुजास्खलिताः सन्ति तेषां कियन्तः समायाताः।

राजा। प्रवेश्यन्तामविचारेणैव।

दौवा। तथाकरोति। प्रविश्य।

पुरुषः। जयति देवः।

राजा। कथयत रे कियद्दूरं भगवन्तो गताः।

पुरु। कुलियाग्रामं यावत्।

राजा। सार्व्वभौममुखं निरीक्षते।

सार्व्व। देव नवद्वीपपारे पारेगङ्गं कश्चन तन्नामा ग्रामोऽस्ति।

राजा। आमूलं कथय।

पुरु। देव इतो देवाधिकारं यावत्तावत्तव प्रभावेनैव निर्व्वाहितवर्त्मसौकर्य्यो अचङ्क्रमणेनैव सर्व्वे गतवन्तः। गौडसीम्नि प्रवेष्टुं त्रयः पन्थानः। इयं रुद्धं एकस्तु जलदुर्गः तमेवोद्दिश्य चलिते सति तत्सीमाधिकारी तुरुष्कोऽरुष्कोषकार इव सर्व्वेषां मर्म्महा महामद्यपो दुर्वृत्तचक्रचूडामणिः। इतो देशाद् ये गच्छन्ति तेषां दुर्गतिः क्रियते इति श्रुत्वा सर्व्वेषामेव भयमुत्पन्नं महाप्रभवे कोऽपि न श्रावयति। अस्मत्सीमाधिकारिणोक्तम्। अत्र कियान् विलम्बः क्रियतां यावन्मयाऽनेन सन्धिः सन्धीयते इत्येतावत् कथनसमकालमेव तस्यैव कश्चित् अस्मत्सोमाधिकारिणः समीपमागतः।

राजा। ततस्ततः।

पुरु। आगत्य कथितम्। यदि त्वमनुमन्यसे तदा भवद्देशादागच्छन्तं श्रीकृष्णचैतन्यदेवमहं विलोकये।

राजा। ततस्ततः।

पुरु। ततोऽनेनोक्तम्। चिचतुरैश्चेदायात तदायातु नामेति श्रुत्वा तथैवागतो भगवत्पादसमीपभूमौ निपतितश्चिरं प्रणनाम। ततः सर्व्वैरुक्तम्। भगवन्नस्य साहाय्येनैव सुखेन गन्तुं शक्यते। एनं प्रति कृपावलोकः क्रियतामिति तदनुरोधेन तं प्रति कृतदृक्पाते भगवति स यवनः पुलकाश्रुगद्गदस्वरो भवन् ग्रहग्रस्त इव जातः। ततो गोपीनाथाचार्य्येणोक्तम्। अये महाप्रभुरयं सुखेन कथं चलति।

राजा। ततस्ततः।

पुरु। ततस्तेनोक्तं कियद्दूरं भवद्भिर्गन्तव्यम्। तदनु गोपीनाथेनोक्तम्। गन्तव्यं तावत् पाणीयहाटीपर्य्यन्तमिदानीम्।

राजा। ततस्ततः।

पुरु। ततः।

प्रफुल्लरोमा गलदश्रुधारः
सगद्गदं किञ्चिदसौ जगाद।
अहो मदीयं महदेव भाग्यं
देवस्य साहाय्यविधौ भवेयमिति॥

सकलसज्जननाविकैर्वाह्यमाना नवीना तरणिर्मध्यगृहशालिनी पुनः प्रक्षालिता क्षणेनाधिनदि समानायिता। अनन्तरं नौकान्तरं स्वयमप्यारुह्य भगवन्त एनामधिरोहन्त्विति निग-

दिते देवेन सह सर्व्वे तामारूरुहुः। अथ स एव जलचर-दस्युभयनिवारणाय स्वयमग्रेसरो भूत्वा मन्त्रेश्वरमुत्तीर्य्य पिच्छनदाग्रामपर्य्यन्तमागतवान्। निवृत्तिसमये भगवता जगन्नाथ-प्रसाद-मनोहराख्यमोदकाः प्रसादीकृताः। तानवाप्य हरिं वदेत्याविष्टो भूत्वा महाभागवतदशामापन्नः।

राजा विस्मयं नाटयति।

सार्व्व। एवमेवेश्वरस्य लीला। तथा हि

अस्थानेऽपि प्रथयति कृपामीश्वरोऽसौ स्वतन्त्रः
स्थानेऽप्युच्चैर्जनयतितरां नूनमौदास्यमेव।
रामो देवः स गुहमकरोदात्मनीनं सखायं
कृष्णः स्तोत्रैः प्रणमति विधौ हन्त मौनी बभूव॥

ततः। पुरु। तदाज्ञया भगवत्कीर्त्तनं कुर्व्वन्तस्ते नाविकास्तथा तरणिमवाहयन्त यथैकेनाह्ना पाणीयहाटीग्रामे समुत्तीर्णाः स्मः।

राजा। तत्र को वर्त्तते।

सार्व्व। राघवपण्डितः।

पुरु। ततो यदभूत्तदाश्चर्य्यम्।

राजा। कथमिव।

पुरु। देव।

यावद्देवो न सुरसरितस्तीरसीमानमाप्त-
स्तावत् सर्व्वं जनमयमभूद्धन्त किं तद् ब्रवीमि।
किं तत्रासीन्नहह धरणीधूलयो लोकरूपाः

किं तारा वा मनुजवपुषः पेतुरुर्व्यां नभस्तः ॥

एवं गङ्गातटतः कष्टेनैव तद्वाटीमभ्याययौ देवः ।

राजा । ततस्ततः ।

पुरु । ततस्तां रजनीं तत्रैव गमयित्वा परेद्यवि नौ-वर्त्मनैव चलितवान् ।

अथो अविच्छिन्नशुभप्रवाहा
निरन्तराया चपलोर्म्मिहस्ता ।
निरन्तरं विष्णुपदावतारा
गङ्गेव दीर्घा जनपङ्क्तिरासीत् ॥

ततः कुमारहट्टे श्रीवासपण्डितवाटीमभ्याययौ । तत्र च गङ्गातीराद्वाटीपर्य्यन्तगमने यत्र यत्र पदमर्पयतीशस्तत्र पादरजसां ग्रहणाय प्राणि-पाणिपतनेन स पन्था हन्त गर्त्तमय एव बभूव । तत्रोत्तीर्ण एव भगवति जगदानन्दः शिवानन्दालये भगवदगोचर एव गतवान् । तत्र तेन चिरमेव स्थितमिति तदाशक्त्या भगवानत्रानेतव्य इति रचनावैशिष्ट्यमपि कृतवान् ।

अथ

प्राचीरस्योपरि विटपिनां सर्व्वशाखासु भूमौ
रथ्यां रथ्यामनु पथि पथि प्राणिषु प्राप्तवत्सु ।
उच्चैरुच्चैर्वद हरिमिति प्रौढघोषेषु देवो
रात्रीशेषे तरिमधि शिवानन्दनीतः प्रतस्थे ॥

ततो जगदानन्देनोभयोः पार्श्वयोः कदलीस्तम्भपूर्णकुम्भमु-

कुलदीपावलिभिः सुरचनाविशेषेण शिवानन्दवाटीपर्य्यन्तमभिमण्डितं वर्त्मारूढः स्मितसुमधुरवदनो जगदानन्दकृतमिति मन्यमानो वामे वासुदेववाटीपथमपि तथाविधमालोक्य किमितोऽग्रे गन्तव्यं किमिति इति सन्दिहानो वासुदेवेनोचे। भगवन्नग्रतः शिवानन्दवाटीमेवालङ्कुर्व्विति तथा कुर्व्वाणो जगदानन्देन धारितचरणाम्बुजस्तदीयभगवद्गृहं प्रविष्टः। अनन्तरं तच्चरणोदकं गृहपटलोपरि किञ्चिद्विकीर्य्य कियदन्तःपुरे परिजनेभ्यो जगदानन्देनैव दत्तम्। अनन्तरं मुहूर्त्तं स्थित्वा वासुदेववाटीमागत्य क्षणमवस्थाय पुनस्तरणिमारुह्य चलितवति भगवति चरणजलग्रहणार्थमाकण्ठमग्नानां जनानां यद्वैयग्र्यं जातं तदवलोक्य भगवतस्तथा करुणा जाता यथा सर्व्वैरेव चरणजलं प्राप्तमासीत्। ततस्तटवर्त्मनैव सर्व्वलोकाश्चलिता न कोऽपि निववृतिरे।

राजा। ततस्ततः।

पुरु। ततोऽद्वैतवाटीमभ्येत्य हरिदासेनाभिवन्दितस्तथैव तरणिवर्त्मना नवद्वीपस्य पारे कुलियानामग्रामे माधवदासवाट्यामुत्तीर्णवान्। नवद्वीपलोकानुग्रहहेतोः सप्तदिनानि तत्र स्थितवान्। तत्र च नवद्वीपात् पारगमने।

य आतरः काकिणिकैकमात्र
आसीत् प्रतिव्यक्ति स तु क्रमेण।
वंहीयसीष्वप्यथ नौषु सोऽभूत्
कार्षापणानामधिकाधिकोऽपि॥

अपि च। दुर्गं बध्नाति वंशैर्दृढतरविपुलैर्माधवो यन्निशायां
तत्प्रातश्चूर्णभावं व्रजति जनघटाघट्टनेन क्रमेण।
सप्ताहान्येवमेव व्यजनि जनिमतां दर्शनौत्कण्ठ्यभाजां
सङ्कष्टो यत्र देवः स्वयममरधुनीं स्नातुमीशोऽपि नेशः॥

एवं सप्तदिनानि तत्र स्थित्वा पुनस्तटवर्त्मनैव चलितवान्।

स यत्र यत्रोपससार देवो
वृत्तान्ततः प्राक् तत एव लोकाः।
ततस्ततो भूरपि भूरिभुग्ना
विशिष्य विस्मापयते फणीन्द्रम्॥

श्रुतञ्च गौडेश्वरस्य राजधान्याः पारे गङ्गं चलतो भगवतः पश्चादुभयोः पार्श्वयो स्खलन्तीं लोकघटामालोक्य गौडेश्वरो गङ्गातटघटमानोपकारिकामारूढो विस्मितः किमिदमिति यदा पृष्टवान् तदा केशववसुनाम्ना तदमात्येन कथितम्। श्रूयते श्रीकृष्णचैतन्यो नाम कोऽपि महापुरुषः पुरुषोत्तमान्मथुरां प्रयाति तद्दिदृक्षया अमी लोकाः सञ्चरन्ति इति। ततस्तेनाप्युक्तम्। अयमीश्वरो भवति यस्यैवंविधं लोकाकर्षणमिति। अतः परञ्च श्रुतम्। ततः कियद्दूरं गत्वा पुनः प्रत्यावृत्तो न तेन पथा मथुरां गमिष्यति अपि तु पुरुषोत्तममागत्य वनपथेनैवेति न जानीमः सत्यमसत्यम्वेति।

नेपथ्ये। सत्यं भोः सत्यम्।

आगतश्च सहसा स एकको
नीलशैलतिलकं विलोक्य च।

लोकसङ्कुलभिया वनाध्वना
निहुतः स मथुरां जगाम च ॥

राजा। सविस्मयम्। काशीमिश्रस्य स्वर इव श्रूयते तदाहूयताम्।

प्रविश्य सत्वरम्।

काशीमिश्रः। देव अयमयमनाहूत एवागतः।

राजा। कथय किं तत्त्वमिदम्।

काशी। सत्यमेव लोकभिया ततोऽपि निवृत्तः। ततोऽपि केनाप्यविदित एव चलितवान्।

राजा। सार्व्वभौम अस्माकन्तु समः पन्थाः विच्छेददुःखस्य तुल्यफलत्वात्। एकाकिनस्तस्य निर्व्वाहः कथं भवतु।

काशी। भिक्षायोग्याः कियन्तो विप्राः प्रेषिताः सन्ति। भगवता तु तन्नज्ञायते।

राजा। साधु मिश्र साधु किमप्युक्ता गतम्।

काशी। आगतप्रायोऽहमिति।

राजा। तत्किं दिनं भविष्यति।

भट्टाचार्य्यः। जङ्घाजीविनः कियन्तो गच्छन्तु यथा भगवतो वार्त्तां प्रापयन्ति।

सार्व्व। उचितमेवैतत्।

राजा। काशीमिश्रमहापात्रं चन्दनेश्वरं मदाज्ञया समादिश यथैवं करोति।

काशी। देव परीक्षामहापात्रं निवेद्य मयैव तथाकारितमस्ति कतिचिदागतप्राया एव।

प्रविश्य

दौवारिकः। देव महाप्रभोर्वार्त्ताहारिणो द्वारि वर्त्तन्ते।

राजा। प्रवेश्यन्ताम्।

दौवा। तथा करोति।

प्रविश्य

वार्त्ताहारिणः। जयति जयति देवः।

राजा। कथयत किं जानीथ।

वार्त्ताहा। सर्व्वमेव जानीमः।

प्रत्यावृत्तः स मधुपुरतो दृष्टवृन्दावनश्रीः
कुञ्जे कुञ्जे तरणितनयाकूलतः क्लृप्तकेलिः।
गत्वा गोवर्द्धनगिरिवरं कानने कानने च
भ्रान्त्वा भ्रान्त्वा दिनकतिपयं वर्त्मनीशो व्यलोकि॥

राजा। अरे वृन्दावने किं किं कृतं भगवता तज्जानासि।

वार्त्ताहा। अथ किम्। तत्सङ्गे समागतानां केषाञ्चिद्भाग्यभाजां मुखतः श्रुतम्।

राजा। कथ्यताम्।

वार्त्ताहा। आविर्भावादवधि स निजानन्दवृन्दैककन्दो
यद्यप्युच्चैः प्रथयतितरां तद्विकारप्रकारान्।
वृन्दारण्योपगमसमये हन्त ते ते तरङ्गा
वृद्धिं प्रापुर्यदुपरि वचश्चित्तयोर्नो निवेशः॥

तथा हि । क्वचन च यमुनावनान्तलक्ष्मी-
मवकलयन्ननुरक्तिमुक्तकण्ठम् ।
विलपति परिरभ्य लोभ्यबाहुः
प्रतिलतिकं प्रतिशाखि सोऽखिलेशः ॥

अपि च । नैचिकीनिचयवीक्षणमोदा-
दुन्मदः स्खलितवान् गलदस्रः ।
स्यन्दमानसुरसिन्धुरिवासी-
द्वातभग्न इव मेरुतटान्तः ॥

राजा । ततः ।

वार्त्ताहा । ततस्तैः कथितम् ।

मदमुदितमयूरकण्ठकान्त-
द्युतिमभिवीक्ष्य कुतश्चिदप्यकस्मात् ।
स्खलति लुठति वेपते विरौति
द्रवति विषीदति हन्त मूर्च्छतीशः ॥

अपि च । क्वापि वत्सकुलमुच्चलपुच्छं
धावमानमनुवीक्ष्य वनान्तः ।
कण्टकावलिनि वर्त्मनि सद्यो
वीक्षताङ्गमभितः स्खलतीशः ॥

राजा । ततः ।

वार्त्ताहा ।

कुञ्जसीमनि कदाऽपि यदृच्छा-
मूर्च्छया निपतितस्य धरण्याम् ।

आलिहन्ति हरिणामुखफेणा
नापिवन्ति शकुना नयनाम्भः ॥

कदापि। पतयालुरसावुपत्यकाया-
मपि गोवर्द्धनभूधरस्य देवः।
अनुरागसुधाब्धिमध्यमग्नो
नहि भग्नोऽपि वहिर्व्यथां विवेद ॥

अनुवनमनुकुञ्जवीक्षमाणे
रुदति विभावनुरक्तिमुक्तकण्ठम्।
रुरुदुरिव लताश्च शाखिनश्च
द्विजमृगराजिरभाजि मूर्च्छयैव ॥

अपि च। विलपति करुणस्वरेण देवे
जलधरधीरगभीरनिस्वनेऽपि।
चिरमनुविलपन्ति वास्यकण्ठाः
क्वचन च लास्यमपास्य नीलकण्ठाः ॥

एवमत्यनुरागवैकल्यादीश्वरत्वेनैव धार्य्यमाणदेहं तमालोकयद्भिः पुण्यवद्भिर्बलभद्रभट्टाचार्य्यादिभिरहो अनर्थोऽयमापतित इति चिन्तयद्भिर्बलादिव वृन्दावनान्निष्कासितो भगवानिति न चिरकालावस्थितिस्तत्र तस्येति। ततश्च।

यः प्रागेव प्रियगुणगणैर्गाढबद्धोऽपि मुक्तो
गेहाध्यासाद्रस इव परो मूर्त्त एवाप्यमूर्त्तः।
प्रेमालापैर्दृढतरपरिष्वङ्गरङ्गैः प्रयागे
तं श्रीरूपं सममनुपमे नानुजग्राह देवः ॥

राजा। सार्व्वभौम अतिप्रेष्ठवृन्दावनोऽपि कथमसौ स्वल्प-मेव कालं तत्रावतस्थे।

सार्व्व। जगन्नाथेन तद्विरहमसहमानेन समाकृष्ट इव।

अपि च। प्रियस्वरूपे दयितस्वरूपे
प्रेमस्वरूपे सहजाभिरूपे।
निजानुरूपे प्रभुरेकरूपे
ततान रूपे स्वविलासरूपे॥

राजा। ततस्ततः।

वार्त्ताहा। ततश्च वाराणस्याम्।
चन्द्रशेखर इति प्रथितस्य
ब्राह्मणस्य भवने भुवनेशः।
प्राक्तनैः सुकृतराशिभिरस्य
प्रत्यपद्यत तदा स यतीन्द्रः॥

राजा। ततस्ततः।

वार्त्ताहा। तदानीन्तु।
तमेत्य पश्येत्यनुरागपूर्व्वं
विश्वेश्वरो विश्वमिव न्ययुङ्क्त।
कुतोऽन्यथा तावति तुल्यकाले
तुल्यक्रियः सर्व्वजनो बभूव॥

अपि च। ब्रह्मचारिगृहिभिक्षुवनस्था
याज्ञिका व्रतपराश्च तमीयुः।
मत्सरैः कतिपयैर्यतिमुख्यै-

रेव तत्र न गतं न स दृष्टः ॥

राजा। सार्व्वभौम किमिति तथाविधानामपि नादृशं मात्सर्य्यम्।

सार्व्व। महाराज यावन्मनो जयो न भवति तावदेव भगवती मत्सरलता न किञ्चिदपि मुञ्चति।

राजा। ततस्ततः।

वार्त्ताहा। ततश्च।

गौडेन्द्रस्य सभाविभूषणमणिस्त्यक्त्वा य ऋद्धां श्रियं
रूपस्याग्रज एष एव तरुणीं वैराग्यलक्ष्मीं दधे।
अन्तर्भक्तिरसेन पूर्णहृदयो वाह्येऽवधूताकृतिः
शैवालैः पिहितं महासर इव प्रीतिप्रदस्तद्विदाम्॥

राजा। ततस्ततः।

वार्त्ताहा। तं सनातनमपागतमक्ष्णो-
र्दृष्टिमात्रमतिमात्रदयार्द्रः।
आलिलिङ्ग परिघायतदोर्भ्यां
सानुकम्पमथ चम्पकगौरः॥

राजा। कथमिव। तस्य दर्शनं जातम्।

वार्त्ताहा। श्रुतमिदं तन्मुखादेव।

राजा। कथ्यताम्।

वार्त्ताहा।

औत्कण्ठ्यैकपुरःसराः प्रथमतो ये यान्ति नाथाग्रतो
निष्क्रामन्ति त ईशनामनिरताः सास्राः सरोमोद्गमाः।

यातायातवतां क्रमं विगणयन् तत्पादधूलीर्ज्जुषन्
सर्व्वज्ञेन वहिः स्थितो भगवता कैरप्ययं नायितः॥

राजा। ततस्ततः।

वार्त्ताहा। ततश्च न मे प्रियश्चतुर्वेदीत्यादि पठित्वा सत्वरमवतीर्य्यायं दोर्भ्यां परिरब्ध इति।

राजा। ततस्ततः।

वार्त्ताहा। ततस्तत्रैव काऽपि किंवदन्ती श्रुता।

राजा। काऽसौ।

वार्त्ताहा।

पुरुषोत्तममेत्य तैः पुनर्गमयित्वा कतिचिद्दिनान्यपि।
रमितैः प्रभुनैव तद्गिरोप्यथ वृन्दावनमेव गंस्यते॥

राजा। किं देवेन सहैव वा किं पश्चात्।

वार्त्ताहा। पश्चादेव भविष्यति। यतो वाराणसीत एकाकिनैव भगवता चलितमिति दृष्टम्। अन्यदपि तत्र किमपि श्रुतम्।

सार्व्व। किं तत्।

वार्त्ताहा। कालेन वृन्दावनकेलिवार्त्ता
लुप्तेति तां ख्यापयितुं विशिष्य।
कृपामृतेनाभिषिषेच देव-
स्तत्रैव रूपञ्च सनातनञ्च॥

रामानन्दः। समुचितमेवैतत्।

नेपथ्ये। दूरतो जयजयेत्युच्चैः कोलाहलः।

सर्व्वे। आकर्ण्य। अये समागत इव भगवान् श्रीकृष्णचैतन्यः। यदयमपूर्व्व एव कोलाहलः श्रूयते।

पुनर्नेपथ्ये। अद्यास्माकं सफलमभवज्जन्म नेत्रे कृतार्थे
सर्व्वस्तापः सपदि विरतो निर्वृतिं प्राप चेतः।
किं वा ब्रूमो बहुलमपरं पश्य जन्मान्तरं नो
वृन्दारण्यात् पुनरुपगतो नीलशैलं यतीन्द्रः॥

राजा। किमपरं विलम्बध्वे तत्रैव गच्छाम। इति सर्व्वे निष्क्रान्ताः।

ततः प्रविशति श्रीकृष्णचैतन्यस्तत्कालोपनतौ परमानन्दपुरीस्वरूपौ च। परितो दिदृक्षोपनताः काशीमिश्रादयश्च।

श्रीचै। पुरीश्वरं प्रति। स्वामिन्।
तीर्थद्वयं यदपि तुल्यमिदं महान्तः
काश्यादयोऽपि पुरतः कलुषापहारि।
आनन्ददाः किल तथाऽपि महान्त एव
यद्युष्मदीक्षणसुखं हि सुखाय तेन॥

अतो हि त्वादृशां सङ्गस्तीर्थान्तरसेवनादपि परमो रम्य इति शीघ्रमेवायातम्।

पुरीश्वरः। अस्ति तादृशं नो भागधेयम्। यदतिकालं भगवद्विरह-दव-दहनेन न दग्धाः स्मः।

सत्वरमुपसृत्य सार्व्वभौमरामानन्दौ दण्डवत्प्रणमतः श्रीचैतन्यः तावालिङ्गति।

काशीमिश्रः। स्वामिन् जगन्नाथवल्लभावकाशानन्तरं श्री-

जगन्नाथः शिशयिषुरपि भगवन्तं प्रतीक्षते तत्त्वरितमेव तमवलोकयन्तु।

श्रीचै। एहि पुरीश्वर एहि। इति सर्व्वैः सह निष्क्रान्तः।

इति निष्क्रान्ताः सर्व्वे।

इति मथुरागमनो नाम नवमोऽङ्कः॥

---

## दशमाङ्कः।

ततः प्रविशति कश्चिद्वैदेशिकः।

वैदेशिकः। श्रुतं मया प्रत्यब्दमेव गुण्डिचासमये अद्वैताचार्य्यादयः सर्व्वे श्रीकृष्णचैतन्यदर्शनार्थं गच्छन्ति। तेषामभिभावकतया शिवानन्दनामा कश्चित्तस्यैव भगवतः पार्षदो वर्त्मनः कण्टकायमानानां घट्टपालानां घट्टदेयादिनिघ्नविघ्ननिवारक आचाण्डालमपि प्रतिपाल्य नयति तदहमपि तमनुसन्दधामि यथा तस्य सङ्ग एव गम्यते। इति कतिचित्पदानि गत्वा। अये पुरतोऽयं समीचीनो जन आलोक्यते तदयमेव प्रष्टव्यः। इत्युपसर्पति।

ततः प्रविशत्यद्वैतसेवकः कश्चिद्गन्धर्व्वनामा।

गन्धर्व्वः। अये नियुक्तोऽस्मि स्वामिनाऽद्वैतेन। यथा
आयातः पुरुषोत्तमस्य गमने कालः शुभोऽयं वयं
यामः सत्वरमेव सम्प्रति शिवानन्दस्त्वया भण्यताम्।
प्रस्थानस्य दिनं विधाय लिखतु क्वैकत्र सर्व्वे वयं
गच्छन्तः सहसा भवेम मिलिताः पश्चात्पुरोभावतः॥

तदहमुपैमि। इति परिक्रामति।

वैद्ये। उपसृत्य। भ्रातः क्व यासि।

गन्ध। आयात इत्यादि पठति।

वैद्ये। सहर्षमात्मगतम्। यत् श्रुतं मया तदवितथमेव। तथाऽपि पृच्छामि। प्रकाशम्। भ्रातः अपरिचितं प्रतिपाल्य स किं नयति।

गन्ध। भ्रातः कुक्कुरोऽपि तेन प्रतिपाल्य नीतोऽस्ति किं पुनर्मानुषः।

वैद्ये। भ्रातः कथय कीदृशं तत्।

गन्ध। भगवतो मथुरागमनात् पूर्व्वमेकस्मिन्नब्दे सर्व्वेष्वस्मद्देशेषु लोकेषु चलितवत्सु कश्चित् कुक्कुरोऽपि रोपितया-दृच्छिकेच्छः शिवानन्दनिकटे चलितः। शिवानन्दोऽपि सङ्गे सङ्गे चलन्तमालोक्य सश्रद्धमेवानुसन्धत्ते। प्रतिवसति समयेऽनुच्छिष्टमेवान्नं तस्मै प्रयच्छति। यत्र नद्यादिपारं तत्र तदर्थं पृथक् यथेष्टमातरं दत्वा नावमारोहयति। सोऽपि तदनुपदमेव प्रत्यहं चलति। एवं वर्त्मनस्त्रिभागपर्य्यन्तं गते कुत्रापि दिवसे तद्भक्ष्यमन्नं विस्मृत्य भृत्येन न दत्तं पश्चात्तमनवलोक्य अहो अद्य शुने भक्ष्यं न दत्तमित्यनुतपता स्वयमितस्ततो नामग्राहमाह्वयताऽपि न तस्य दर्शनं लब्धम्। तदवधि पुरुषोत्तमपर्य्यन्तमेव न दृष्टः। पश्चान्मनःकष्टतरमेवास्य जातम्। तदनु दैवगत्या पुरुषोत्तमे समुत्तीर्णं तमेव श्वानं जलधितीरोपकण्ठमेकाकिन उपविष्टस्य भगवतश्चैतन्यस्य समीपे दृष्ट्वा

शिवानन्दः सापराधमिव प्रणम्य दूरे स्थितोऽवलोकयति। भगवान् जगन्नाथप्रसाद-नारिकेलशस्यं खण्डशः प्रक्षिप्य ददाति कृष्णं ब्रूहीति च वदति स च एकैकं भक्षयति कृष्ण कृष्ण-कृष्णेत्यपि वदति तदपूर्व्वमालोक्य। शिवानन्दः पुनस्तं प्रणम्य स्वापराधं क्षमापयति स्म। पुनस्तदवधि सोऽपरं न केनाप्यदृश्यत। मन्ये तेनैव शरीरेण रूपान्तरं लब्ध्वा लोकान्तरं प्राप्तः।

वैदे। भ्रातरद्य मे शुभो दिवसः। यदियं श्रीकृष्णचैतन्य-कथा कर्णातिथिर्जाता। यो देवः कुक्कुरमपि भगवन्नाम ग्राहयामास तस्य नृलोकं प्रति यत् कृपा भविष्यति तत् किमुत। तद्भ्रातः पथि गच्छतामेषां वर्त्मकण्टकभूता घट्टपालाः कीदृशं व्यवहरन्ति।

गन्ध। भ्रातः श्रूयताम्।

प्रभावादेव देवस्य प्रत्यब्दमनुगच्छताम्।
यातायातसुखं भूरि सर्व्वेषामेव निश्चितम्॥

तथा क्वचनाब्दे कष्टञ्च भवति।

वैदे। कीदृशं तत्।

गन्ध। क्वचनाब्दे सर्व्वेषु मदीश्वरप्रभृतिषु परस्सहस्रेषु जनेषु चलितेषु सकलजनाभिभावकेन शिवानन्देनापि सपरिकरेण चलितम्। स एव प्रतिघट्टं मदीश्वरादिगणवर्ज्जं यावन्तो गच्छन्ति तावतामेव घट्टदेयस्य प्रतिभवी भूत्वा स्वयमेव जनं प्रति यत्र यल्लगति तस्य निर्णयानुरूपं परिच्छेद्य दत्वा याति।

लोकाः सुखं गच्छन्ति। एवं गच्छत्सु सत्सु रेमुणाजनपदे घट्ट-पालानामधिकारी कश्चित् गजपतेरमात्यो गजपतिमहाराजे दक्षिणां दिशमीयुषि स्वतन्त्रः सन् तत्रैवागतः। तेन दुरात्मना लङ्घितमर्य्यादेन करं वर्द्धयित्वा प्रत्येकं जनान् विगणय्य गता-नामब्दानामपि तत् क्रमेणैव लेखयित्वा पुञ्जीभूतं शुल्कमा-दातुं शिवानन्दः काष्ठनिगडेन बद्धः। तद्बन्धने सर्व्व एव मदी-श्वरादयः परमोद्विग्ना अकृताह्निका एव तस्थुः।

वैदे। ततः।

गन्ध। ततो रात्रेर्यामद्वये गते तेनैव पामरेण शिवानन्दो यष्टिधारकेण केनचिदनुचरेणाऽऽजुहुवे। स तदानीं परमोद्विग्न आसीत्। कदाचिदयं प्रहरतीति चैतन्यचरणं स्मृत्वा वल्लभेन सह तत्पुरत ईयिवान्। अनन्तरं सुप्तोत्थितं दीपिकाधारिभिर्ब-हुभिः परिवृतं वीक्ष्य विभयाञ्चकार। अनन्तरं अमात्येन पृष्टः। अये त्वं सपरिकरः समायातोऽसि। अनेनोक्तम्। अथ किम्। पुनः स ऊचे। त्वं कस्य लोकः। अनेनोक्तम्। श्रीकृष्णचैतन्यस्य। पुनस्तेनोक्तम्। त्वं चैतन्यस्य अहं जगन्नाथस्य जगन्नाथचैत-न्ययोः को महान्। अनेनोक्तम्। मम तु कृष्णचैतन्य एव महान् इत्याकर्ण्य प्रीति सुमुखो भूत्वा सापराध इव अये मया स्वप्नो दृष्टः श्रीकृष्णचैतन्यो मामुक्तवान् मदीयो लोक-स्त्वया बद्धोऽतित्वरितमेवमुच्यतामिति तदयमपराधो मे क्षन्त-व्यः। तव किञ्चिदपि दातव्यं नास्ति सुखेन प्रातरुत्थाय सर्व्वैः सह गम्यतामित्युक्त्वा दीपिकाधारिणौ द्वौ उक्तवान्।

अस्य परिकरो यत्र वर्त्तते तत्रायं स्थाप्यतामिति तथा याते तदा सर्व्वेऽस्मदीश्वरादय आह्निकमारब्धवन्तः।

वैदे। अहो विचित्रैव चैतन्यदेवस्य करुणा प्रभाव ऐश्वर्य्यञ्च।

गन्ध। त्वं कुतोऽसि।

वैदे। अहमुत्तरराढतः।

गन्ध। कथमेकाकी।

वैदे। नरहरिदासादिभिरहं प्रेषितः।

गन्ध। किमर्थम्।

वैदे। कदाऽसौ पुरुषोत्तमं गन्तेति ज्ञातुम्।

गन्ध। तदिहैव मदीश्वरालयनिकटे तिष्ठ यावदहं ज्ञात्वा समागच्छामि। अन्ये केचिद्दशजना भवानिव तत्र चलन्तो मदीश्वरेणैव स्थापिता मयैव सह यूयं यास्यथ इति।

वैदे। कथं तेषु भवदीश्वरस्य तादृशानुग्रहो जातः।

गन्ध। तेष्वेकः परममधुरो लोकलोचनरसायनमिव नवीनवया रमणीयरूपः। सहजावतीर्णश्रीकृष्णप्रेमरसवाह्यान्तरसरसः श्रीनाथनामा द्विजकुलचन्द्रस्तमतिलोभनीयं दृष्ट्वा मदीश्वरः परमं पिप्रिये। उक्तञ्च। मया रहसि श्रीकृष्णचैतन्यं भवान् दर्शयिष्यते माऽन्यसङ्गे गन्तव्यमिति। गृहतस्तदनुरोधेन मासमारभ्य दशानामेव योगक्षेमं करोति।

वैदे। भवत्वहमिहैव स्थित्वा भवन्तं प्रतीक्षे।

गन्ध। अहमपि शिवानन्दमनुसर्पामि। इति उभौ निष्क्रान्तौ।

विष्कम्भकः। ततः प्रविशति शिवानन्दस्तत्सङ्गे यियासवः कियन्तोऽन्ये च।

शिवा। तत्रैकं प्रति। अये त्वं कुतोऽसि।

सः। महात्मन् गोवर्द्धनदासेनाहं त्वत्समीपं प्रेषितः।

शिवा। आं ज्ञातम्। रघुनाथदासोद्देशार्थं गमिष्यति भवान्।

सः। अथ किम्।

शिवा। किं तदुद्देशेन।

अन्यः। महाशय स त्वया परिचीयते।

शिवा। श्रूयताम्।

आचार्य्यो यदुनन्दनः सुमधुरः श्रीवासुदेवप्रिय-
स्तच्छिष्यो रघुनाथ इत्यधिगुणः प्राणाधिको मादृशाम्।
श्रीचैतन्यकृपातिरेकसततस्निग्धः स्वरूपानुगो
वैराग्यस्य निधिर्न कस्य विदितो नीलाचले तिष्ठताम्॥

अपि च। यः सर्व्वलोकैकमनोऽभिरुच्या
सौभाग्यभूः काचिदकृष्टपच्या।
यत्रायमारोपणतुल्यकालं
तत्प्रेमशाखी फलवानतुल्यम्॥

तथाऽपि आगच्छ मयैव प्रतिपाल्य नेतव्योऽसि यावद्दैतदेवाज्ञा न लभ्यते तावदेव विलम्बः। इति चिन्तयति।

ततः प्रविशति गन्धर्व्वः।

गन्धर्व्वः। अये अयमयं शिवानन्दः। तद्यावदुपसर्पामि। इत्युपसर्पति।

शिवा। पुरोऽवलोक्य। अये पुरतोऽयमाचार्य्यगोस्वामिनो भृत्य इव लक्ष्यते। तद्भद्रं जातं यदर्थं चिन्त्यते तदेव सम्पन्नम्।

उपसृत्य गन्ध। महाशय आज्ञापयति भगवानद्वैतगोस्वामी भवन्तम्।

शिवा। अवहितोऽस्मि कथ्यताम्।

गन्ध। आयातः। इत्यादि पुनः पठति।

शिवा। अहमपि तदाज्ञां प्रतीक्षमाण एवास्मि।

गन्ध। विशेषः कश्चिदस्ति।

शिवा। कोऽसौ।

गन्ध। अस्मिन्नब्दे स्नानयात्रा च द्रष्टव्येति।

शिवा। अभीष्टमेवैतदखिलस्य तत्साधय भगवन्तो ज्ञाप्यन्ताम्। अयमहं दिनानि निर्द्धार्य्य चरणान्तिकं गच्छन्नस्मि। तावदहं श्रीवासपण्डितप्रभृतिभिर्निर्णेतुं तत्र गच्छामि त्वमपि साधय। इति निष्क्रान्ताः।

ततः प्रविशत्यपटोक्षेपेण सार्व्वभौमः।

सार्व्वभौमः। यद्यपि भगवतोऽस्मिन्नर्थे नानुमतिर्जाता तथाऽपि हठादेवाहं वाराणसीं गत्वा भगवन्मतं ग्राहयामीति हठादेव तत्र गच्छन्नस्मि न जाने किं भवति। यद्यपि भगवत इच्छाधीनैव करुणा तथाऽपि करुणापरतन्त्रत्वं तस्येति कदाचित् करुणाऽपि स्वतन्त्रा भवतीति करुणाया एव साहाय्येन यद्भवति तदेव भविष्यति। इति परिक्रामन् पुरोऽवलोक्य। अहो यदमी एकत्र समुपचिता अनेकशो नानादेशीया जनाः परतो

दृश्यन्ते तदमी तैर्थिका एव। पुनर्निभाल्य। अये सर्व्व एव गौडीयाः। पुनर्निरूप्य। अयमयमद्वैताचार्य्यः। अयमयं नित्यानन्दावधूतः। अयमयं श्रीवासः। अयमयं हरिदासः। अयं गदाधरदासः। इमे गोविन्दघोषादयः। एष मकरध्वजः। एष काशीनाथः। एते नरहरिप्रमुखाः। एते कुलीनग्रामीणा रामानन्दादयः। एते नित्यानन्दपार्षदा गौरीदासादयः। किं बहुना सर्व्वे चैतन्यपार्षदा एव समागच्छन्ति। तद्भद्रमेव जातमद्यात्रैव स्थित्वा प्रत्येकमेते सम्भाषणीयाः। इत्युपसर्पति।

ततः प्रविशन्ति भगवद्दर्शनार्थं प्रस्थिता अद्वैतादयः।

अद्वै। अये पुरतः सार्व्वभौम इव दृश्यते कोऽर्थः।

सार्व्व। उपसृत्याद्वैतं प्रणमति एवमन्यानपि। दूरे हरिदासं विलोक्य। कुलजात्यनपेक्षाय हरिदासाय ते नमः।

हरिदासः। दूरेऽपसर्पन् ससाध्वसं प्रणमति।

अद्वै। सार्व्वभौम भवद्भिः कथं श्रीकृष्णचैतन्यपदारविन्दस्य विच्छेद उरीकृतः।

सार्व्व। एवमेव। इति सर्व्वं कथयति।

अद्वै। हंहो अद्यात्रैव सर्व्वे विश्रामन्तु भट्टाचार्य्येण सह गोष्ठी कर्त्तव्या।

सर्व्वे। यथारुचितं भवद्भ्यः। इति यथायथं वासं कुर्व्वन्ति।

श्रीकान्तः। शिवानन्दं प्रति। भो मातुलमहाशय अहं अग्रे यामि यदि वोऽनुमतिर्भवति।

शिवा। यथासुखं साधय।

श्रीका। प्रणम्य निष्क्रामति।

अद्वै। एहि भट्टाचार्य्य एहि वासं कृत्वा समये सर्व्वं श्रोतव्यम्। इति निष्क्रान्ताः।

ततः प्रविशतः स्वरूपगोविन्दौ।

स्वरू। श्रुतं गौडतः सर्व्वेऽद्वैतादयः समागच्छन्ति।

गोविन्दः। सम्प्रति तान् मध्यवर्त्मनि परित्यज्य श्रीकान्तोऽधुनैव समायातः।

स्वरू। क्वासौ।

गोवि। महाप्रभुना सह सङ्कथयन्नास्ते।

स्वरू। तदावामपि द्रष्टुएव। इत्युपसर्पतः।

ततः प्रविशति सुखोपविष्टः पुरीश्वरेण सह स महाप्रभुः कियद्दूरे श्रीकान्तश्च।

महा। श्रीकान्त कथय के के समायान्ति।

श्रीका। प्रभो सर्व्वं एव त्वदीयाः। अस्मिन्नब्दे न कोऽपि तत्र वर्त्तते। अदृष्टश्रीचरणाश्च केचित्।

स्वरू। उपसृत्य। जयति जयति महाप्रभुः।

महा। एह्येहि स्वरूप। इति स्वसमीपमुपवेशयति।

श्रीका। स्वरूपं प्रणमति।

महा। श्रीकान्त ततस्ततः के तेऽदृष्टपूर्व्वाः।

श्रीका। प्रभो अद्वैताचार्य्यस्य पुत्रा विष्णुदासगोपालदासादयः। अन्यश्चाद्वैतसङ्गे कश्चिदखिलजनप्रियः श्रीनाथनामा।

महा। कथमसौ शिवानन्दसङ्गं त्यक्ता तत्सङ्गे आयाति।

श्रीका। तेनोक्तं मया निभृते भवान् महाप्रभोः समीपे नीत्वा तद्विशेषानुग्रहं ग्राहयितव्य इति तदाश्वासेन।

महा। विहस्य स्वरूपं प्रति। श्रूयताम्।

अद्वैतोपायनमिदमतिस्वादुभावीति कार्य्यं
प्रेमैतस्मिन् किमपि भवताऽप्यत्र मैत्रीस्वरूपे।
त्वञ्चास्मिन् शङ्करसुमधुरं भावमुद्भावयेथाः
सर्व्वेषां हि प्रकृतिमधुरो हन्त तुल्येन योगः॥

उभौ। यथाऽऽज्ञापयति देवः।

महा। पुनः कौ।

श्रीका। वासुदेवापत्यं मातुलस्य पुत्रौ।

महा। तौ दृष्टपूर्व्वौ।

श्रीका। कनीयांस्तु यः सोऽदृष्टश्रीचरणः।

महा। पुरीश्वरं प्रति। स्वामिन् तव दासः।

श्रीका। प्रभो एवमेव।

महा। ततस्ततः।

श्रीका। रामानन्दवसोरपत्यं एवमन्येऽपि।

महा। स्वामिन् पुरीश्वर हंहो स्वरूप अस्मिन्नब्दे एतेषां कृते खल्वमी महद्दर्शनं लप्स्यन्ते।

उभौ। स्वगतम्। अहो कः सन्दर्भोऽस्य वचसः। भवतु स्वयमेव स्फुटिष्यति।

महा। अस्मिन्नब्दे भूपालदर्शनमाचार्य्यस्य भविष्यति।

श्रीका। देव मया दूराद्देवागतं तेन तदनभिज्ञोऽस्मि।

पुरीस्वरूपौ। स्वगतम्। अहो अवगतं गतेऽब्दे अद्वैताचार्य्येण यच्छूपालः सम्भाषितस्तेन स एवाक्रोशोऽद्यापि भगवतो मनसि जागर्त्ति।

महा। पुरीश्वरवासुदेवचरितमेव मे रोचते।

पुरी। भाग्यवानेवासौ यस्य परोक्षेऽपि भगवन्तः प्रशंसन्ति।

नेपथ्ये कलकलः।

पुरी। आकर्ण्य। देव उपसन्ना एवामी। यदयं कोलाहलः श्रूयते।

महा। गोविन्द भगवत्प्रसादमालां गृहीत्वा उपसर्पतु भवान्।

गोविन्दः। यथाऽऽज्ञापयसि। इति निष्क्रान्तः।

प्रविश्य वाणीनाथः। प्रणम्याञ्जलिं बद्ध्वा। देव महाप्रसादान्नादीनि भगवतः श्रीजगन्नाथस्य।

महा। वाणीनाथ साधु समयज्ञोऽसि यदधुनाऽद्वैतादीनामागमनमाकलय्यैवं कृतवान् यावद्गोविन्द एति तावत् क्वापि समावेशय।

वाणी। तथा करोति।

प्रविश्य काशीमिश्रः। भगवन् श्वः खलु भगवतः स्नानमहोत्सवः।

महा। आं जानामि। किन्तु भो मिश्र यथास्मिन्नब्दे आपा-

मरमपि स्नानमहोत्सवं मदीयगौडीयाः सुखेन पश्यन्ति तथा कर्त्तव्यम्।

काशी। स्वामिन् भूपतिनाऽऽदिष्टोऽस्मि अस्मिन्नब्दे मदीयावरोधादयः केऽपि देवस्नानं न द्रक्ष्यन्ति। ते यत्र चक्रवेष्टोपरि स्थित्वा पूर्व्वं देवस्नानं पश्यन्ति तत्रैव सर्व्वे गौडीया आरोहणीयाः।

महा। स्वस्ति तस्मै।

पुनर्नेपथ्ये सङ्कीर्त्तनध्वनिः।

पुरी। स्वामिन् चारगणेशं प्राप्ता अमी।

महा। स्वरूप त्वमग्रतोऽभिगच्छ पश्चादहमपि।

स्वरू। यथाऽऽज्ञापयसि। इति निष्क्रान्तः।

पुरी। स्वगतम्।

आक्षेपोऽपि महानसौ प्रकटितः सम्प्रत्ययश्चादरो
भूयानेव विकाश्यते भगवताऽद्वैतं प्रति स्निह्यता।
सौहार्द्दस्य स एवमेव महिमा देव स्वभावात् सतो-
र्बन्धूनां गुणदोषयोरपि गुणे दृष्टिर्न दोषग्रहः॥

महा। पुरीश्वर उत्तिष्ठ वयमप्यभिगच्छाम।

पुरी। उत्तिष्ठन्तु गोस्वामिनः। इति पुरादभ्युपगच्छन्ति।

ततः प्रविशति भगवत्प्रसादमालालम्भनलब्धद्विगुणहर्षो नृत्यानन्दनिर्भरोऽद्वैतः परितः कीर्त्तयन्तश्च अभितः शिवानन्दादयश्च। अद्वैतः दूरादागच्छन्तं महाप्रभुमालोक्य नृत्यन्नेव भूमौ पतति।

शिवा। स्वतनयं प्रति सर्व्वान् श्रावयित्वा। पश्य पश्य अयमयम्।

विद्युद्दामद्युतिरतिशयोत्कण्ठकण्ठीरवेन्द्र-
क्रीडागामी कनकपरिघद्राघिमोद्दामबाहुः।
सिंहग्रीवो नवदिनकरद्योतविद्योतिवासाः
श्रीगौराङ्गः स्फुरति पुरतो वन्द्यतां वन्द्यतां भोः॥

इति सर्व्वे भूमौ प्रणम्य पुनर्यावदुत्तिष्ठन्ति तावदेवाद्वैतगोष्ठीप्रविष्टं भगवन्तं पुनर्दृग्भिरन्वेषयन्ति।

शिवानन्दः। निर्वर्ण्य।

अद्वैतचैतन्यदृढोपगूहने
न कोऽपि किञ्चित् परिचेतुमीश्वरः।
चैतन्यमद्वैतमितीक्षते जनो-
ऽद्वैतञ्च चैतन्यमितीक्षते क्षणम्॥

पश्यत भोः। अद्वैतमग्रे विनिधाय देवो
दिदृक्षया तस्य गतः पुरस्तात्।
प्रवेशयत्येव निजाश्रमान्त-
र्विलम्ब्य सर्व्वे क्रमतो विशन्तु॥

इति सर्व्वान्निवार्य्य क्रमात् प्रवेशयन्ति। महाप्रभुरुपविश्य प्रत्येक-मद्वैतादीन् यथायथमालिङ्गनसम्भाषणावलोकनादिभिरानन्दयित्वा भगवत्प्रसादान्नं श्रीहस्तेन मुष्टिप्रपूरं ददाति। अद्वैतादयो यथाक्रमं गृह्णन्ति।

भगवान्। भो भो अद्य नापरं भोक्तव्यं चक्रवेष्टोपरि सर्व्वैरेव रजनीमुखे समारोढव्यं यथा सुखेन स्नानमहोत्सवो दृश्यते।

सर्व्वे। यथाऽऽज्ञापयन्ति। इति निष्क्रान्ताः।

स्वरू। भगवन् स्वयमपि यथासमयाह्निकं कर्त्तुमर्हन्ति।

भगवान्। यथारुचितं वः। इति पुरीस्वामिना सह निष्क्रान्तः।

स्वरू। काशीमिश्र भूपालो राजधानीतः साम्प्रतमागन्ता किं गुण्डिचानिकटे।

नेपथ्ये। आयातः।

काशी। गोस्वामिन् यथाऽयं प्रस्तौति तथाऽऽगत इव लक्ष्यते।

स्वरू। तर्हि स्नानदर्शनं सुखेन भावि।

काशी। तत्त्वं जानामि। इति निष्क्रान्तः।

स्वरू। गोविन्द एहि भगवन्तमनुगच्छाव। इति निष्क्रान्तः।

ततः प्रविशति वडभीस्थो राजा पुरोहितश्च।

राजा। पुरोहित अस्मिन्नब्दे मया इह स्थितेनैव स्नानं द्रष्टव्यम्। अन्यथा भगवतो गौराङ्गस्य सङ्कोचो भविष्यति।

पुरोहि। उचितमेवैतत्।

राजा। कः कोऽत्र भो अहूयतां काशीमिश्रः।

प्रविश्य काशीमिश्रः। अयमस्मि आज्ञापयतु देवः।

राजा। मिश्र।

ये गौडीया इह भगवतः पार्षदास्तज्जना वा
तेषां ये वा तदनुगमिनो हन्त ये वा सभृत्याः।
सर्व्वेऽस्मत्स्नोतनयसुहृदो यत्र यत्रोपविश्य
स्नानं पश्यन्त्यतिसुखममी सन्तु तत्रोपविष्टाः।

काशी। महाराज भगवदाज्ञया पूर्व्वमेव तथैव सम्पादितमस्ति।

राजा। सुविहितम्।

प्रविश्य कश्चित्पदातिकः कञ्चुकी। देव देव्यो विज्ञापयन्ति। अस्माभिर्देवस्नानं द्रष्टुमागतं तन्नाभूदिति।

राजा। कथं नो भविष्यति इहैव स्थित्वा ताभिरपि द्रष्टव्यं पश्यायं तत्प्रकारोऽस्ति कल्पितः।

काशी। देव पश्य पश्य।

स्नानालयस्याभिमुखं सुसौध-
मट्टं गतास्चन्द्रकराभिगुप्तम्।
देवा इवैते विलसन्ति भक्ताः
सर्व्वे नभोमध्य इवोपविष्टाः॥

राजा। साधु प्रवेशिता इमे श्रीकृष्णचैतन्यपार्षदाः। तदधुना साधयतु भवान् जगन्नाथ-विजयसमयो नेदीयानिव जातस्तदुचितकर्म्मणे नापरं विलम्बस्व।

काशी। यथाऽऽज्ञापयति। इति निष्क्रान्तः।

ततः प्रविशन्ति महिष्यः।

महिष्यः। जयदु जयदु महाराओ (१)।

राजा। देवीं प्रति। एहि देवि एहि कृतार्थीकुरु जनुः। इति सश्लाघमुपवेश्य। देवि पश्य पश्य।

इमे चैतन्यदेवस्य पार्षदा विश्वपावनाः।
कियतैव विलम्बेन तमप्यालोकयिष्यसि॥

---

१ जयतु जयतु महाराजः।

तदेतान् प्रणम ।

देवी प्रणमति ।

राजा । पश्य पश्य महदिदमाश्चर्य्यम् ।

महाज्यैष्ठीयोगे भवति भगवद्देवकुलगा
पताकोदञ्चन्तीत्यतिसुविदितोऽयं जनरवः ।
इति श्रद्धान्नेत्रा युगपदभिपश्यन्ति त इमां
लिहन्तीं तज्जिह्वामिव तुहिनभानोरिव वपुः ॥

महिषी । देअ सच्चंज्जेव एसा जणस्सुइ (१) ।

राजा । पश्य स्वयमपि । इति उत्पतन्तीं पताकां दर्शयति ।

नेपथ्ये काहलध्वनिः ।

राजा । आकर्ण्य । देवि पश्य पश्य जगन्नाथदेवस्य विजय-समयो जातस्तदाकलयामि श्रीकृष्णचैतन्यदेवस्यागमनम् । इति तथा कृत्वा सहर्षम् । अयमयं श्रीकृष्णचैतन्यः । पश्य पश्य ।

अविरलजनसङ्घे सर्व्वमूर्द्धोर्द्ध्ववर्त्ती
स्फुरति भगवतोऽयं मण्डलः श्रीमुखस्य ।
तरदुरुविधहंसे वारिराशाविवोच्चैः
कलय किमपि हेम्नः पद्ममुद्दण्डनालम् ॥

देवी । अज्जउत्त अम्हाणं ऊसवादो ऊसवान्तरमापडिदं । जदो जअस्साह-दंसणत्थिणीणं गोरचन्ददंसणं जादं (२) ।

१ देव सत्यमेव एषा जनश्रुतिः ।

२ आर्यपुत्र अस्माकमुत्सवत उत्सवान्तरमापतितम् । यतो जगन्नाथदर्शनार्थिनीनां गौरचन्द्रदर्शनं जातम् ।

संस्कृतेन। महः पूरः सद्यो विषयरससंशोषणविधौ
प्रचण्डो मार्त्तण्डव्यतिकर इवास्य प्रसृमरः।
अहार्य्यं माधुर्य्यं भगवदनुरागामृतकिरो
महावर्षाः कोऽयं कनकनिधिरक्ष्णोः पथि गतः॥

अपि च। निर्मञ्छयानि विधुभिर्मुखविम्बमस्य
नीराजयानि च रुचं कनकप्रदीपैः।
सम्पूजयानि पदपद्ममसुप्रसूनैः
प्रत्याददानि करुणामपि लक्षदेहैः॥

इति प्रणमति।

राजा। यथार्थोऽयमनुभवो भवत्याः। तदाकलय श्रीजगन्नाथोऽपि स्नानालयमध्यारूढः।

देवी आलोक्य प्रणमति।

नेपथ्ये पुनः कोलाहलध्वनिः।

राजा। देवि पश्य पश्य श्रीजगन्नाथस्नानम्।

देवी। उभयतो दृष्टिमाधाय। अज्जउत्त महंज्जेव कोदूहलं (१)।

राजा। किं तत्।

देवी। संस्कृतेन।

अन्योऽन्याभिमुखस्थितौ विनिमिषावन्योन्यसन्दर्शने
स्नानाम्भोनयनाम्भसोः प्लुततनू दुर्वारया धारया।

---

१ आर्यपुत्र महदेव कौतूहलम्।

कारुण्यैकमहानिधी भवभयप्रध्वंसनैकौषधी
देवौ तुल्यरुची पुरो विलसतः प्रश्यामगौरावपि ॥

राजा। सत्यमेतत्।

देवी। अज्जउत्त णिव्वूढो सिणाणमहूसवो देअस्स। जदो दक्खिणामुह-विलोअण-क्खणे अग्गदो सरइ गोरचन्दमा(१)।

राजा। एवमेव।

अग्रतोऽस्य विरलायते जनः
पृष्ठतस्त्वविरलायते पुनः।
पार्षदास्तु परितो भुजाभुजि
श्रद्धया विदधति स्म मण्डलम् ॥

नेपथ्ये। अनवसरतामभ्यायाते प्रभुर्जगदीश्वरे
विरहविधुरां हन्तावस्थां जगाम यतीश्वरः।
भवति विशदप्रेमानन्दावतारतयायदा-
ह्यभिनिविशते यस्मिन् तस्मिन् तदेव स तन्मयः ॥

राजा। आकर्ण्य। अये निश्चितमिदमुक्तं काशीमिश्रेण। तत् पुनराकलयामि वाक्यशेषम्। इति सावधानस्तिष्ठति। पुनस्तत्रैव।

स्नानं नो तुलसीनिषेचनविधिर्नो चक्रसन्दर्शनं
नो नामग्रहणञ्च नो नतिततिर्नो हन्त भिक्षाऽपि नो।
श्रीनीलाचलचन्द्रमोऽनवसरव्याजात् स्वयैवेच्छया
स्वीकृत्य स्ववियोगदुःखमनिशं निःस्पन्दमाक्रन्दति ॥

---

१ आर्यपुत्र निर्व्यूढः स्नानमहोत्सवो देवस्य। यतो दक्षिणामुखविलोकनक्षणे अग्रतः सरति गौरचन्द्रमाः।

राजा । अहो प्रमादो यावदनवसरं तावदेव चेदेवं स्यात्तदा किं भवति । पुनस्तत्रैव ।

नान्योऽप्युपायः प्रियकीर्त्तनस्य
सङ्कीर्त्तनानन्दधुमन्तरेण ।
रसान्तरायेति तदेव कर्त्तुं
स्वरूप एवोद्यममातनोति ॥

राजा । भद्रं भो भद्रम् । देवीं प्रति । प्रिये त्वमितोऽपसर । आकारयामि तावदेनं काशीमिश्रमिति ।

देवी । जह आणवेदि (१) । इति निष्क्रान्ता ।

ततः प्रविशति काशीमिश्रः ।

काशीमिश्रः । जयति जयति देवः ।

राजा । मिश्र कथय किमुक्तं भवता ।

काशी । यदुक्तं तथैव तत् ।

राजा । कथय स्वरूपगोस्वामिना किं मन्त्रितमस्ति ।

काशी । भगवता स्वीकृते तथाविधविरहवैकल्यानुभवे तदपनोदार्थं सकलैरेव सुहृद्भिः सह मन्त्रितम् । अद्य सायं यदि गोपीनाथविजयदर्शनानन्तरं भगवता मधुरतर-भगवत्कीर्त्तनं श्रूयते तदा रसान्तरं भवति तस्मिंश्च सति विरहावेशः श्लथत इति सम्मन्त्र्य रोहिणीकुण्डसविधे परमाप्तैस्तदीयहृदयज्ञैरेव कतिपयैर्मधुरमधुरं कीर्त्तनमारब्धितमस्ति ।

---

१ यथा आज्ञापयति ।

राजा। मिश्र कथमिदमालोक्यते।

मिश्रः। जगतोऽस्वेदारोहसि।

राजा। तथैव क्रियते। इति तेन सह तदारोहं नाटयति।

नेपथ्ये मधुरतरसङ्कीर्त्तनकलकलः।

मिश्रः। निरूप्य। भो महाराज पश्य पश्य।

विरहव्यथैव मूर्त्ता करुणो रस एव मूर्त्तिमान् दिवसम्।
आसीद्य एष सम्प्रति कीर्त्तनकलतोऽयमन्यथा जातः॥

राजा। भवति हि।

आनन्दकन्दलितमस्य वपुर्यदाऽयं
भावं स्पृशत्यथ तमेव वहिर्व्यनक्ति।
यैः पूर्य्यते स्फटिकजा घटिका रसैस्तै-
स्तद्वर्णभाग्भवति तानुपदर्शयन्ती॥

पुनर्नेपथ्ये गानध्वनिः।

राजा। आकर्ण्य। किमेतद्गीतम्।

काशी। भगवद्वंशी-नाद-माधुरी-प्रतिपादकमिदं गौडीय-भाषोपनिबद्धमिति देवेन नाकलय्यते।

राजा। अहो चित्रं यदेषः।

गौरः कृष्ण इति स्वयं प्रतिफलन् पुण्यात्मनां मानसे
नीलाद्रौ नटतीह सम्प्रथयते वृन्दावनीयं रसम्।
आद्यः कोऽपि पुमान् नवोत्सुकवधूकृष्णानुरागव्यथा-
स्वादी चित्रमहो विचित्रमहहो चैतन्यलीलायितम्॥

पुनर्निरूप्य। अये चिरकालमेकस्यैव गीतपदस्य ध्रुवमेव गीयते।

काशी। प्रथमतो यस्यां लीलायां मनः प्रविवेश न ततः पुनरावर्त्तते।

राजा। भवत्येवमेव। इति पुनरालोक्य सहर्षम्। अहो कीदृशमस्य माधुर्य्यं पश्य पश्य।

जानूत्क्षेपभुजावधूननपदन्यासाक्षिविक्षेपणै-
र्हन्तानन्दयतो मनांसि सुहृदां विश्वं जडीकुर्व्वतः।
निष्ठेवैर्मुखमस्य भाति सुभगस्मेरं महानन्दतः
फेणैर्हेमसरोरुहं वृतमिव स्त्यानैरिवेन्दुर्हिमैः॥

पुनरालोक्य सविस्मयम्। अये।

क एष निःसाध्वसमास्यमण्डला-
न्निष्ठेवमाकृष्य पिवन् प्रमोदते।
चन्द्रादहिर्भूतमिवामृतद्रव-
स्फोल्लासिनं फेणमहो चकोरकः॥

काशी। शुभानन्दनामाऽयं वैष्णवः।

राजा। अहो एकमेव गीतध्रुवपदम्। एक एव तारस्वरः। एक एवोल्लासो गायकानां यामद्वयं यावत्। भगवतोऽपि समान एवानन्दप्रकाशचमत्कारः। तदमीभी रसान्तरेण विरहावेशतरङ्गो दूरीकृतः। प्रकृतरसान्तरं के नान्तरयन्तु उभयथैव भगवत आह्निकविगमः।

काशी। तथाऽपि विरहावेशो भक्तानां दुःसहः। इति पुनर्निभाल्य। देव निर्व्यूढोऽयं नृत्योत्सवः। यदमी भगवन्तं धृत्वा स्वाऽऽवासं प्रति गच्छन्ति।

राजा। भद्रं सम्भाव्यते कदाचिदाह्निकमपि तदधुना मिश्र भगवत्समीपं गम्यतामहमिहैव क्षणं निद्रामि।

काशी। यथाऽऽज्ञापयसि। इति निष्क्रान्तः।

राजा। गतो मिश्रस्तदिह निद्रामि। इति निद्रां नाटयित्वा पुनरुत्थाय। अहो विभातेयं विभावरी। यतः

अस्ताचलोदयमहीधरयोस्तटान्तं
शीतांशुचण्डकिरणावुपसेदिवांसौ।
तुल्यत्विषौ मृदुतया वहतः प्रगस्य
वर्षीयसः क्षणमिवोपरि लोचनत्वम्॥

इति परितो विलोकयति।

नेपथ्ये। अहो महत्कौतुकम्।

प्रातः प्रत्यहमर्घ्यगन्धतुलसीपुष्पादिभिः पूजय-
त्यद्वैते भगवन्तमन्तरसुखावेशोल्लसद्रोमणि।
स्मित्वा तैरुठतो हृतैरतिरसेनाद्वैतमभ्यर्च्चय-
न्देवो वुर्वुरितैर्मुखेऽङ्गुलिदलैर्वाद्यवाद्यं व्यधात्॥

अपि च। यस्य न्यस्य कराब्जकोषकुहरे पूजोपचारं प्रभोः
पूजां कर्त्तुमनाः प्रयाति कुतुकादद्वैतदेवोऽन्वहम्।
श्रीनाथः स तदा प्रभोर्गुणनिधेः सन्दर्शनस्पर्शन-
प्रेमालापकृपाकटाक्षकलया पूर्णान्तरोऽजायत॥

राजा। अये कथमयं तुलसीमिश्रः परीक्षामहापात्रं किमपि प्रस्तौति तत् श्रोतव्यं यत् सत्वरमित एवाभिगच्छति।

प्रविश्य

तुलसी। देव जगन्नाथस्य रथयात्रा नेदीयसीति गुण्डिचामन्दिरमार्ज्जनक्षालनार्थं स्वयमेव महाप्रभुस्तत्रोद्यतः।

राजा। प्रियं मे प्रियं किञ्चिदाज्ञप्तमस्ति।

तुलसी। यदाज्ञाप्तं तत् काशीमिश्रेणैव सम्पादितम्।

राजा। किं तत्।

तुलसी। यावन्तस्तल्लोकास्तावत्य एव सम्मार्ज्जन्यो घटास्तु ततोऽधिकाः।

राजा। एतावन्मात्रम्।

तुल। किमन्येन तत्प्रयोजनम्।

नेपथ्ये कलकलः।

तुलसी। देव पश्य पश्य।

श्रीहस्तेन विलिप्य चन्दनरसैः प्रत्येकमेषां वपु-
र्निक्षिप्याप्यधिकन्धरं भगवतो निर्माल्यमाल्यानि च।
उल्लासद्रुममञ्जरीरिव करे सङ्ग्राहयन् शोधनी-
र्माद्यत्तुङ्गमतङ्गजालसगतिर्गौरो विनिष्क्रामति॥

अपि च। निर्गच्छन्ति मुदा मनोरथरथैः सन्तोषदन्तावलै-
रत्युल्लासतुरङ्गमैर्भवजये जैत्रा इवामी भटाः।
रोमाञ्चावलिकञ्चुकाढ्यवपुषोऽश्रान्तस्रवैर्बिभ्रतो
वास्यैर्वारुणमस्त्रमेव समदं झङ्कारझङ्कारिणः॥

राजा। धिग् भूपत्वं कदाऽहमेषां मध्ये यः कश्चिदेव भवन् भगवन्तमनुव्रजामि। तुलसी मिश्र कथमिदं कौतुकमामूलमाकर्ण्यते।

तुल। अस्ति कश्चिन्मदीयः पुरुषः स एव सर्व्वं समाकल्य्यागतप्रायः।

राजा। प्रियं मे प्रियम्। प्रविश्य सत्वरः कश्चित् राजानं प्रणम्य।

महापात्र सर्व्वमवलोक्यागतम्।

राजा। कथय।

पुरुषः। देव अवधीयताम्।

पाणौ कृत्वा मधुरमृदुले शोधनीमूर्द्धमूर्द्धं
सर्व्वैः सार्द्धं स्वयमयमसौ गुण्डिचामण्डपान्तः।
लूतातन्तून् मलिनरजसः सारयन्नेव तैस्तै-
र्व्याप्तो गौरः शशधर इव व्यक्तलक्ष्मा बभूव॥

अनन्तरम्। हस्तप्राप्ये कमपि समुपारोप्य कस्यापि चांशे
मा भैषीरित्यहह निगदन् मेघगम्भीरयोक्त्या।
अभ्युन्नेत्रः सरजसतनुर्मार्ज्जयित्वोर्द्धमूर्द्धं
भित्तीः सिंहासनमथतलं शोधयामास देवः॥

अपि च। बहिर्वासोऽञ्चल्यामवकरचयं शोधनिकया
समाहृत्यापूर्य्य स्वयमथ बहिः सारयति सः।
क्वचिद्धस्तप्राप्यावधि सरभसं मार्ष्टि च कलं
सुहृद्वर्गैर्गायत्यपि स कुतुकं गापयति च॥

राजा। ततस्ततः।

पुरु। एवं मूलमण्डप-जगन्मोहनभोग-मण्डपानां मार्ज्जनानन्तरम्।

कूपात् केऽपि समुद्धरन्ति कतरः कस्यापि हस्ते ददौ

सोऽप्यन्यस्य करे स चापरकरे सोऽम्भः करे कस्यचित्।
इत्थं शृङ्खलया घटानथ नयन् पूर्णानपूर्णांस्त्यजन्
पूर्णापूर्णपरिग्रहत्यजनयोः शिक्षां व्यतानीज्जनः॥

अपि च। केचिद्द्वारगिरा मनोज्ञमतयः सिञ्चन्ति सिंहासनं
भित्तीः केचन केऽपि तस्य करयोर्वार्य्यर्पणं कुर्व्वते।
केचित् तत्पदपङ्कजोपरि घटैः सिञ्चन्ति सन्तोषत-
स्तत्केऽप्यञ्जलिना पिबन्ति ददते केचिच्च मूर्द्धन्यपि॥

राजा। ततः।

पुरु। ततः पूर्व्ववत् क्रमेण प्रक्षाल्य धौतपादा एव सर्व्वे स्व-स्ववासोभिस्तत्क्रमेण सलिलान्यपसारयाम्बभूवुः। तथा कृत्वा अङ्गणमुत्तीर्य्य तच्छोधनारम्भे।

पङ्क्तीभूयोपविष्टे निजजननिकरे कौतुकान्मध्यवर्त्ती
चिन्वन्वासःप्रपूरं चिरसमुपचिताः शर्करास्त्वरस्य।
पश्यामः के कतीमा विदधति विचिता इत्यवोचद्यदेश-
स्तर्ह्येवामी प्रमोदादहमहमिकया चेतुमुद्योगमीयुः॥

एवं स्वचरितमिव निरवकरं स्वहृदयमिव स्निग्धञ्च सर्व्वत-श्चत्वरतलं कृत्वा तेऽमी भगवत्कीर्त्तनमारेभिरे। तथा हि

क्षोभं क्षौणीमृगाक्ष्याः स्थगनमिह रवेः कम्पमाशावधूनां
स्तम्भं वातस्य कुर्व्वन्नमरपरिवृढस्याक्षमत्वं सहस्रे।
खेदं सप्तर्षिगोष्ठ्याः परमरसमयोल्लासमौत्तानपादे-
र्ध्यानध्वंसं विरिञ्चेः स जयति भगवत्कीर्त्तनानन्दनादः॥

ततश्च। नर्त्तित्वा क्षणमेव चारु मधुरं गौरो हरिर्नर्त्तया-

स्वाङ्केऽद्वैततनूजमेकमधुरं गोपालदासाभिधम्।
नृत्यन्नेव समूर्च्छितः सुखवशाद्देहान्तरं यन्निवा-
द्वैते खिद्यति पाणिपद्मवलनाद्देवः सतं प्राणयत्॥

ततो हरिध्वनिरुच्चैरुच्चचार।

राजा। अहो मे दुरदृष्टं यदेतदपि न दृष्टम्।

पुरु। ततो नरसिंहनाथमण्डपञ्च संस्कार्य्य धावयित्वा इन्द्रद्युम्नसरसि कृतजलविहारः सर्व्वैरेव तदभ्यर्णवर्त्तिनि कुसुमोद्याने विशश्राम। तदनु वाणीनाथपट्टनायकेनोपनीतानि भगवत्प्रसादादीनि सर्व्वैरेव सेवितानि। नेपथ्ये।

नेत्रोत्सवः सर्व्वजनस्य भावी
श्वः श्रीपतेः श्रीमुखदर्शनेन।
इतीव चित्तोत्सव एष जातो
महोत्सवस्यापि महोत्सवो यः॥

राजा। महापात्र काशीमिश्रोऽयं यथाऽऽलपति तथा मन्ये भवन्तमेव श्रावयति तदधुना नेत्रोत्सवस्य कृताकृतावेक्षणमाचरतु भवान्।

तुलसी। यथाऽऽज्ञापयसि। इति निष्क्रान्तः।

ततः प्रविशति काशीमिश्रः।

काशीमिश्रः। अहो अतिमधुरं भावी।

काशीश्वरक्षपितलोकचयः पुरस्ताद्
गोविन्दपालितविलासगतिः परस्तात्।
पार्श्वद्वये च सपुरीश्वरसस्वरूपो

नेत्रोत्सवाय स भविष्यति गौरचन्द्रः॥

राजा। अहो मनसा सह सङ्कथयन् मामपि नावलोकते मिश्रः।

मिश्रः। दक्षिणेऽक्षि निक्षिप्य। अहो निष्पन्नमण्डनैव रथत्रयी विशेषतोऽयं श्रीजगन्नाथस्य रथः।

उत्सर्पिदर्पणसहस्रविभावितश्रीः
सच्चारुचामरसुचीनचयैः परीतः।
तेजोमयः समयमेत्य विराजमान
आनन्दयन्नयनमेव रथो विभाति॥

सम्मुखमवलोक्य। अये कथमिहैव राजा। उपसृत्य। जयति जयति महाराजः। महाराज इह स्थितेनैव त्वया रथारोहणं भगवतोऽवलोकनीयं पश्चात् स्नानोत्तरं स्वसेवा विधेया।

राजा। रथविजयसेवा मे नियताऽपि तथा मां नोत्कण्ठयति यथा महाप्रभोर्नृत्यदर्शनस्पृहा।

काशी। रथारोहणे जाते सति यामार्द्धान्तरित एव महाप्रभोर्नृत्यारम्भो भावी।

राजा। सवितर्कम्।

इतश्चेत् पश्येयं भवति परितोषो न मनस-
स्ततो वा पश्येयं तदपि सुलभं नैव भवति।
प्रवेशस्तद्गोष्ठ्यां मम न घटते तद्गततया
तदन्तर्वर्त्तित्वात् कथम कलये तस्य नटनम्॥

तथाऽपि यावन्नटनं तावदेव तत्रैव स्थेयं तत्कृपादेव्येव शरणम्।

काशी। महाराज कञ्चुकिद्वारा महिषीभिरभ्यर्थितमस्ति भगवतो गौरचन्द्रस्य नृत्यदर्शनार्थमिहावस्थानम्।

राजा। सुखेन पश्यन्तु कृतार्थयन्तु लोचने जनुश्च।

काशी। तत्त्वरस्व भगवतो रथारोहणकालः सन्निकृष्ट एव।

राजा। एवमेव।

काशी। अहमपि भगवन्निकट एव गच्छामि। इत्युभौ निष्क्रान्तौ।

ततः प्रविशन्ति कञ्चुकिनोपगम्यमानास्तामेव वडभीमारूढा महिष्यः।

कञ्चु। देव्यः पश्यन्तु।

सम्प्राप्तो रथकन्धरं तनुभृतां नेत्रैर्मनोभिः समं
श्रीनीलाचलचन्द्रमा रथपथं सम्प्राप गौरो हरिः।
भावाक्रान्ततयैव नेत्रमनसी तेषां वरं मुञ्चतः
पूर्व्वं नैव परन्तु पूर्व्वपरयोः सत्यं बलीयान् परः॥

अपि च। मण्डलैस्त्रिभिरसौ स्वजनाना-
मावृतो जयति काञ्चनगौरः।
वीजकोष इव वारिरुहस्य
प्रोल्लसत्तरसहस्रदलस्य॥

देव्यः सोत्कण्ठं निरीक्ष्य प्रणमन्ति।

कञ्चु। देव्यः पश्यन्तु पश्यन्तु।

काशीश्वरोऽजनि बहिर्वलयस्य मुख्यो
गोविन्द उत्तमतमोऽजनि मध्यमस्य।
अभ्यन्तरस्य मणिवज्जयति स्वरूपः
सामाजिकः किल पुरीश्वर ईश्वराग्रे॥

चायां निभाल्य। अहो महत् कौतुकम्।

सङ्कोचाद्विरलीकरोति न जनाश्चैतन्यपादाश्रया-
स्तैस्तैर्गाढनिरन्तरावृततया गौरश्च नो पश्यति।
सोत्कण्ठं नयनद्वयीं तत इतो व्यापारयन्नन्तरं
सम्प्रेम्णु र्हरिचन्दनासविलसद्बाहुर्नृपो भ्राम्यति॥

देव्यः। अस्स जादिसी उक्कण्ठा तादिसंज्जेव ववहरदि (१)।

कञ्चु। अहो प्रमादः।

राजाक्षिवर्त्मभिदुरं हरिचन्दनोऽसौ
ग्रीवासमन्तरयति स्वकरेण मन्दम्।
रुष्टो जघान तमसौ प्रतिरुष्टमेनं
राजैव सान्त्वयति सानुनयं नयेन॥

देव्यः। तादिसाणं निरवेक्खाणं को वराओ हरिचन्दणो (२)।

कञ्चु। पश्यन्तु पश्यन्तु।

उद्दामताण्डवविधौ जगदीश्वरस्य
सर्व्वे परस्परकरग्रहणं विधाय।
बाहू प्रसार्य्य परितः प्रतिषन्ति शश्वद्
भूमौ स्खलत्तरतनोः क्षतशङ्कयैव॥

देव्यः। दाणिं सुहेण दीसइ (३)।

कञ्चु। पश्यन्तु।

---

१ अस्य यादृशी उत्कण्ठा तादृशमेव व्यवहरति।
२ तादृशानां निरपेक्षाणां को वराको हरिचन्दनः।
३ इदानीं सुखेन दृश्यते।

क्षणमुत्प्लवते मृगेन्द्रकल्पं
क्षणमाधावति मत्तनागतुल्यम्।
भ्रमति क्षणमप्यलातचक्र-
प्रभमानन्दतरङ्गतो यतीन्द्रः॥

अपि च। अन्तर्भावविदामुदारमनसामाद्यः स्वरूपो यदा
यज्ज्ञातुं दिशतीदमेव सकलः प्रीत्यैव तज्ज्ञायति।
तस्यार्थस्तनुमानिव प्रतिफलन् गौरो नरीनृत्यते
स्तम्भाश्रुस्वरभङ्गकम्पपुलकप्रस्वेदमूर्च्छास्मितैः॥

देव्यः। अच्चरिअं क्खु एदं पेम्मानन्दचमक्कारस्स (१)।

कञ्चु। पश्यन्तु।

आनन्दाम्बुनिधेर्न वेद्मि कतमैरुच्चावचैरूर्म्मिभि-
र्नृत्योन्मादमदेन गौरभगवत्यानन्दमूर्च्छां गते।
निष्ठेवः कठिनोऽसमस्रवदभूच्छ्वासो न संलक्ष्यते
कान्तिः केवलमुज्ज्वलैव सुहृदामाश्वासवीजायते॥

देव्यः। ईसरोत्ति सम्बित्तोज्जेअ णो जीअणं धारेदि। अण्णधा एदं किं दंसिदुं सक्कीअदि (२)।

कञ्चु। तथा निभाल्य। अहो जीवितमहो जीवितम्।
रामाञ्चाः पुनरुन्मिषन्ति नयने भूयोऽपि पर्य्यश्रुणी
निष्ठेवश्च पुनः प्ररोहति पुनः श्वासोऽधरं धावति।

---

१ आश्चर्यं खलु इदं प्रेमानन्दचमत्कारस्य।

२ ईश्वर इति संविजिरेव नो जीवनं धारयति। अन्यथा एतत् किं द्रष्टुं शक्यते।

सर्व्वेषामभितोऽभितः समुदयत्याह्लादकोलाहलो
देवो जागरयाञ्चकार हृदयं स्वानन्दमूर्च्छां त्यजन् ॥

देव्यः । अम्महे जीविदम्ह जीविदम्ह (१) ।

कञ्चु । पुनर्निभाल्य । अहो अद्भुतम् ।

येनैव गीतेन बभूव मूर्च्छा
तेनैव भूयोऽजनि सम्प्रबोधः ।
किमेक एवैष स कोऽपि मन्त्रः
प्रयोगसंहारविधौ स्वतन्त्रः ॥

अपि च । नृत्योन्मादतरङ्गिणीर्बलवतीरानन्दवात्या क्रमा-
दत्युल्लासयति स्म तत्र जनितो वीचीतरङ्गक्रमः ।
कश्चित् कश्चिदनीनशत्तमपरस्तञ्चापरस्तं पर-
श्चेत्यानन्दतरङ्गजैव विविधा वृत्तिर्न गीतार्थजा ॥

अहो स्वरूपस्य प्रेममाधुर्य्यम् । तथा हि

उत्थाय मन्दमुपविश्य सुखोर्म्मिवेग-
निघ्नस्य तर्ज्जनिकया लिखतो धरित्रीम् ।
आशङ्कितः क्षतिकृते सदयं स्वरूपो
देवस्य पाणिमरुणन्निजपाणिनैषः ॥

पुनर्निरूप्य । अहो कष्टम् ।

गच्छत्येष जगत्पतौ रथगतो बाहू प्रसार्य्य स्वयं
प्रीत्योत्थापयितुं रथोदरमिव श्रीगौरचन्द्रं पुरः ।

---

१ अहो जीविताः स्मो जीविताः स्मः ।

नृत्यन्नेव स चापसर्पति परं वास्योदयेनात्मनो
द्वावेवाक्षिपथं व्यतीयतुरहो भाग्यं विशश्राम नः ॥

तदयमितोऽवतरामो यदयं राजाऽपीत एवागच्छति। इति देवीरवतार्य्य ताभिः सह निष्क्रान्तः।

ततः प्रविशति राजा काशीमिश्रश्च।

राजा। अहो निर्व्यूढो रथोत्सवः।

गुण्डिचागृहमवस्थित एकः
प्राप्तवानुपवनान्तरमन्यः।
देवयुग्ममिदमेव जनानां
चित्तमेव युगपत् प्रविवेश ॥

काशीमिश्रः। होरापञ्चम्यां भगवत्याः श्रियो देव्याः प्रयाण-यात्रा सर्व्वतश्चमत्कारिणी यथा भवति तथा कार्य्या। छत्र-चामरादीनि भगवद्भाण्डारागारे यावन्ति सन्ति यावन्ति वा मम कोषागारेषु सन्ति तावन्त्येव समानेयानि यथा रथोत्स-वादपि लोचनचमत्कारकारकत्वेन मूर्त्त एवाद्भुतरसो भवति।

काशी। यथाऽऽज्ञापयसि।

राजा। त्वमद्यारभ्य तथा कुरु अहमपि पुरं प्रविशामि।

इति निष्क्रान्तः।

काशी। स्वगतम्। आरामान्तरमागतेषु भगवत्पादेषु अद्वै-तादिषु च समस्तेषु महत्सु किं वृत्तमिति निभालयामि।

इति जगन्नाथवल्लभाख्यमुपवनं सहर्षमालोक्य। अहो भगवतः श्री-कृष्णचैतन्यस्यैव साक्षात्।

श्वो मे परश्वो मम तत्परेऽह्नि
ममापरेद्युर्मम चापरेऽह्नि।
ममेति भिन्नादिननिर्णयेना-
द्वैतादयः कौतुकिनो बभूवुः॥

तदधुनात्र मम प्रवेशोऽयोग्यस्तदहमासन्नस्य होरामहोत्सवस्य सामग्रीसमवधानाय गच्छामि। इति निष्क्रान्तः।

ततः प्रविशति श्रीकृष्णचैतन्यः परितोऽद्वैतादयश्च।

श्रीचै। स्वरूप यद्यपि जगन्नाथो द्वारकालीलामनुकरोति तथाऽपि गुण्डिचाव्याजेन वृन्दावनस्मारकेष्वेतेषूपवनेषु विहर्त्तुं प्रत्यब्दमेव नीलाचलं परित्यज्य सुन्दराचलमागच्छति। कथं देवीं श्रियं परित्यजति।

स्वरूपः। स्वामिन् वृन्दावनस्मारकेष्विति यदुक्तं स्वयमेव तदेव सिद्धान्तो नहि वृन्दावने श्रिया सह विहारोऽपि तु गोपाङ्गनाभिरेव।

श्रीचै। तथाऽप्येषा कोपिनी भवति।

स्वरू। प्रणयिनीनां प्रकृतिरेवेयं यत्स्वायोग्यतां नेच्छते।

नेपथ्ये महावादित्रनिर्घोषः।

सर्व्वे। आकर्ण्य। अहो निमेषमात्रमिव दिनचतुष्टयं जातम्। यदयं होरापञ्चमीमहोत्सवः प्रत्यावर्त्तते।

श्रीचै। यथाप्रस्तावमेवायं भगवत्याः श्रीदेव्याः कोपप्रयाणमहोत्सवः। तदयमालोकनीयो भवति।

सर्व्वे। एवमेव। इति आलोकनसमुचितं स्थलं उपसर्पन्ति।

पुनर्नेपथ्ये जयजयध्वनिः ।

स्वरूपः । आलोक्य । भगवन्

मानस्य क्रम एष नैव यदियं स्वैश्वर्य्यविख्यापकै-
र्नानादिव्यपरिच्छदैः स्वयमहो देवं प्रतिक्रामति ।
व्यक्तं रौद्ररसोऽयमम्बुधिभुवः क्रोधस्य यत् स्थायिनो
भूयानेव विकार एष विदितं वैदग्ध्यमस्याः परम् ॥

पुरीश्वरः । स्वरूप सत्यमेव । किन्तु पश्यतां पुनरद्भुत एव रसः ।

तथा हि । पताकाभिर्दैवी कलहमनुभोगीन्द्ररसना-
सहस्रस्य द्वाभ्यां युगपदिव लीढा दशदिशः ।
नभो वापीहंसैरिव मृदुचलैश्चामरचयैः
सितच्छत्रैः फुल्लद्दवलकमलौघैरिव वृता ॥

अपि च । सुधूपानां धूमैः प्रतिदिशमुदीर्णैरुपचिते
घनौघे गम्भीरं ध्वनति मुरजादिव्यतिकरे ।
बलाकानां श्रेण्यामिव धवलसत्तोरणततौ
चलन्त्यामुन्मत्ता इव दधति लास्यानि शिखिनः ॥

अद्वैतः । पुरो वारस्त्रीभिर्गुणविजितरम्भाप्रभृतिभि-
र्लसल्लीलालास्यं मुहुरभिनयन्तीभिरभितः ।
समन्ताद्दासीभिर्व्यजनचयताम्बूलपुटिका-
मणीभृङ्गारादिग्रहणचटुलाभिः परिवृता ॥

अपि च । विमानस्य ग्लानीमिव विदधतीं मुग्धमहसा
चतुर्दोलीं चामीकरमणिमयीमुत्थितवती ।
अतिक्रोधान्धाऽपि स्मरभरसमाभुग्नहृदया

पयोधेः पुत्रीयं पितृजनितदर्पेव वलते ॥

स्वरू। सोपहासम्। अहो मानवैदग्ध्यमस्याः।

श्रीचैतन्यः। स्वरूप कीदृशं प्रणयकोपवैदग्ध्यम्।

स्वरू। या यादृशी तस्याः खलु तथाविधं वैदग्ध्यम्।

श्रीचै। तथाऽपि शृणुमः।

स्वरू। कदाचित् कृतापराधे प्रणयिनि श्रीव्रजराजकिशोरे सविधमागत्य समुचितं व्याहरति सति।

किं पादान्तमुपैषि नास्मि कुपिता नैवापराद्धो भवा-
न्निर्हेतुर्न हि जायते कृतधियां कोपोऽपराधोऽथवा।
योग्या एव हि भोग्यतां दधति ते तत्किं मयाऽयोग्यया
तेनाद्यावधि गोकुलेन्द्रतनयस्वाच्छन्द्यमेवास्तु ते ॥

इदं कोपवैदग्ध्यम्। प्रकारान्तरञ्च।

दूरादुत्थितमन्तिकं मयि गते पीठं करेणार्पितं
स्मित्वा भाषिणि भाषितं मृदुसुधानिःस्यन्दि मन्दं वचः।
आरूढेऽर्द्धमथासनं प्रकटितो हर्षस्तयाऽऽश्लिष्यति
प्रत्याश्लिष्टमवामयैव मनसो वाम्यं तयाऽऽविष्कृतम्॥इति।

श्रीचै। पूर्व्वतोऽपि सुरसमिदम्।

श्रीवासः। सपरिहासम्। गोपालललनानां कैतादृशमैश्वर्य्यम्। ऐश्वर्य्यं हि मदहेतुः।

अस्याः पश्यत भो मदस्य महिमा दासीकुलेनेश्वरी-
गर्व्वात्सेकमदोद्धुरेण यदमी बद्धा कटी रोधसि।
मुख्या एव जगत्पतेः परिजनाः प्रत्येकमाकर्षता

पात्यन्ते स्म निजेश्वरीपदपुरः प्रापय्य चौरा इव ॥

भृत्यापराधे स्वामिनो दण्ड इत्येव श्रुतम्। इदन्तु तद्विपरीतमेवेत्यहो अत्यद्भुतम्।

स्वरू। श्रीवासं प्रति। भोः पण्डित पश्य पश्य तव देव्या वैदग्ध्यम्।

अचेतनस्यास्य रथस्य को वा
मन्तुः कथं ताड्यत एष भृत्यैः।
यास्याम्यदूरेऽहमितीश्वरेण
प्रोक्ते कथं वाऽश्रमि दीर्घकोपः ॥

श्रीवा। स्वामिन् ईश्वर्य्या हि इयमेव रीतिः।

श्रीचै। श्रीवास नारदत्वेन भवान् द्वारकाविलासप्रिय एव तेन तुभ्यमैश्वर्य्यांश एव रोचते। स्वरूपस्य वृन्दावनप्रियत्वात् तथाविधानन्दवैदग्ध्यांश एव प्रेयान्।

अद्वैतः। भगवन्

भवत्पदाम्भोरुहयोरनुग्रहा-
दस्माद्दृशामीदृशमीदृशं महत्।
बभूव सौभाग्यमहो महोत्सवा
मूर्त्ता इवामी विविशुर्दृशोः पथि ॥

श्रीचै। किन्ते भूयः प्रियमुपकरोमि।

अद्वै। किं भूयः प्रियमुपकरिष्यसि।

हेलाखेलायितेनातनि कलिमथनं स्थापितो भक्तियोगो
व्यक्तं तत्रापि नीतः परमसुनिभृतः प्रेमनामा पदार्थः।

क्वापि क्वापि प्रकीर्णा पुरुतरसुभगम्भावुकाभावुकाना
तत्राप्याभीरनारीमुकुटमणिमहाभावविद्याऽनवद्या ॥

अस्माकन्तु।　धर्म्मार्थकामेषु परैव कुत्सा
लिप्सा न मोक्षस्य च कर्हिचिन्नः।
एभिः समस्तैस्तव देव लोकै-
र्लोकान्तरेप्यस्तु सदैव वासः ॥

श्रीचै। एवमेव।

वृन्दारण्यान्तरस्थः सरसविलसिते नात्मनात्मानमुच्च-
रानन्दस्यन्दवन्दीकृतमनसमुरीकृत्य नित्यप्रमोदः।
वृन्दारण्यैकनिष्ठान् स्वरुचिसमतनून् कारयिष्यामि युष्मा-
नित्येवास्तेऽवशिष्टं किमपि मम महत्कर्म्म तच्चातनिष्ये ॥

अपि च।

दास्ये केचन केचन प्रणयिणः सख्ये त एवोभये
राधामाधवनिष्ठया कतिपये श्रीद्वारकाधीशितुः।
सख्यादावुभयत्र केचन परे ये वाऽवतारान्तरे
मय्याबद्धहृदोऽखिलान् वितनवै वृन्दावनासङ्गिनः ॥

अद्वै। तथाऽस्तु।

निजेच्छया प्रापय यद्यदेव
स्थलान्तरं नो वपुरन्तरं वा।
तवैतदाश्चर्य्यचरित्रमेव
जातिस्मरा एव चिरं स्मरामः ॥

तथाऽपीदमस्तु।

आकल्पं कवयन्तु नाम कवयो युष्मद्विलासावलीं

तामेवाभिनयन्तु नर्त्तकगणाः शृण्वन्तु पश्यन्तु ताः ।
सन्तो मत्सरतां त्यजन्तु कुजनाः सन्तोषवन्तः सदा
सन्तु क्षौणिभुजो भवच्चरणयोर्भक्त्या प्रजाः पान्तु च ॥

भगवान्। तथैवास्तु। निष्क्रान्ताः सर्व्वे ॥

महामहोत्सवो नाम दशमोऽङ्कः ॥

यस्योच्छिष्टप्रसादादयमजनि मम प्रौढिमा काव्यरूपी
वाग्देव्या यः कृतार्थी कृत इह रमयोत्कीर्त्य तस्यावतारम्।
यत् कर्त्तव्यं मयैतत्कृतमिह सुधियो येऽनुरज्यन्ति तेऽमी
शृण्वन्त्वन्यान् नमामश्चरितमिदममी कल्पितं नो विदन्तु ॥

श्रीचैतन्यकथा यथामति यथादृष्टं यथाकर्णितं
जग्रन्थे कियती तदीयकृपया बालेन येयं मया ।
एतां तत् प्रियमण्डले शिव शिव स्मृत्येकशेषं गते
को जानातु शृणोतु कस्तदनया कृष्णः स्वयं प्रीयताम् ॥

दृष्टा भागवताः कृपाप्युपगता तेषां स्थितं तेषु च
ज्ञातं वस्तु विनिश्चितञ्च कियता प्रेम्णाऽपि तत्रास्थितम् ।
जीवद्भिर्न मृतं मृतैर्यदि पुनर्मर्त्तव्यमस्माद्विधै-
रुत्पद्यैव न किं मृतं वत विधेरामाय तुभ्यं नमः ॥

शाके चतुर्दशशते रविवाजियुक्ते
गौरो हरिर्धरणिमण्डल आविरासीत् ।
तस्मिंश्चतुर्नवतिभाजि तदीयलीला-
ग्रन्थोऽयमाविरभवत् कतमस्य वक्त्रात् ।

समाप्तमिदं चैतन्यचन्द्रोदयनामनाटकम् ॥

# अशुद्धशोधनं पाठपरिवर्त्तनञ्च।

| पत्र | पङ्क्ति | अयोग्यः। | योग्यः। |
|---|---|---|---|
| ३ | ३ | तया विद्यया | ऽत्तयाऽविद्यया |
| ४ | ११ | -स्वरूपा | -स्वरूपो |
| ४ | १४ | यात्रात्तनीडं | यत्रात्तनीडं |
| ४ | १६ | भवाब्धि | भवाब्ध |
| ४ | १० | कवलं | केवलं |
| ५ | ३ | सनन्दनाद्य-पगीतं | सनन्दनाद्युप-गीतम- |
| ५ | ८ | न्थग्रः | ग्रन्थः |
| ६ | ६ | भावात्कं | भावत्कं |
| १० | ६ | ग्राच्युतः | ग्रायुतः |
| २० | ४ | श्चा ज्ञातम् | श्चां ज्ञातम् |
| २१ | १८ | सतत | सन्तत |
| २२ | ६ | श्चावेद्मि | श्चां वेद्मि |
| २२ | २१ | परुष | पुरुष |
| २३ | २ | दनज | दनुज |
| २३ | ६ | तद्भवाना | तद्भवना |
| २४ | ३ | भाव-दातारो | भाऽवदाता |
| २६ | १३ | पुत्रभावभा-वंहेयत्वेन | पुत्रभावं भावं हीयस्त्वेन |
| २६ | १८ | साध साऽधना | साधु साऽधुना |
| २८ | ५ | ऽभूदेवकस्य | ऽभूद्देवक |
| ३० | २१ | -विशेषाश्चि-दुप- | विशेषाचिदुप |
| ३३ | ६ | सङ्कलं | संङ्कुलं |
| ३३ | १० | क्षण्ा | क्षणां |
| ३४ | २ | सन्तोष | सन्तोषं |
| ३४ | १० | सन्निहितैक-जीवान्नानन्द | सन्निहितैव-जीवानानन्द |
| ३४ | १३ | पश्चाणासि | पराणोसि |
| ३५ | १० | सद्धम्म | सद्धम्मो |
| ३६ | ४ | पनीमश्चा-ण्डाल- | पुनीमश्चण्डाल |
| ३६ | ८ | स्वातन्त्रेण | स्वातन्त्र्येण |
| ३७ | ४ | होन्ति। ज-णायो | होन्ति जणा-यो- |
| ३७ | ५ | साच्चंञ्चेव | सच्चंञ्चेव |
| ३७ | ७ | श्चाम्मिम्मश्चालं | श्चाम्मिस्सु श्चालं |
| ३८ | ७ | दीन्ह | दीह- |
| ३८ | ६ | भेन्हणो | भेन्हलो |
| ३८ | १८ | जिह्मतर | दीर्घतर |
| ४० | १ | -पेच्छतुणं | -पेच्छत्तणं |
| ४० | १५ | ग्रामलिदं | सामलिदं |
| ४१ | १० | दएण- | देएण |
| ४१ | ११ | भवता- | भगवता |
| ४२ | २ | णच्चारिदो | णच्चाविदो |
| ४२ | १० | दधच्चारु- | दधच्चारु- |
| ४४ | २ | णञ्चरवि-हीए | णञ्चरवीहीए |
| ४४ | ८ | पुहवीदन | पुहवीदल |
| ४४ | २० | पुरवीर्थी | पृथिवीतल |
| ४६ | १० | णाञ्चणेण | लोञ्चणेण |
| ४७ | २२ | साद्धं | साद्धं |

| पत्र | पङ्क्ति | अयोग्यः | योग्यः |
|---|---|---|---|
| ४८ | १३ | मागष | मार्गेषु |
| ५२ | ५ | कामयत | कामायते |
| ५४ | २ | प्राचीदेव्या | प्राचीदेव्या |
| ५४ | १० | हद्दी हद्दी | हड्डी हड्डी |
| ५५ | ७ | इयं ज्जेव्व | इयंज्जेव्व |
| ५६ | ६ | सुमते- | मते- |
| ५८ | १ | पइस्सव्वं. | पइस्सव्वं- |
| ६१ | २० | सनियमता-अनियमता- | सनियततामनियतता |
| ६३ | १४ | कलापलिन्नी | कथापलिन्नी |
| ६४ | ८ | दूणना | गुणना |
| ६४ | १७ | कुमाय्या | कुमार्य्या |
| ६७ | २१ | सर | रस |
| ६८ | ९ | पलकयति | पुलकयति |
| ७० | १६ | कुसुमाऽऽसवो | कुसुमासवो- |
| ७१ | २२ | यो | यतो |
| ७२ | ५ | ताव्वणी- | ताव्वली |
| ७४ | १० | खल | खलु |
| ७५ | ३ | लवणिमा | लवणिम |
| ७६ | ६ | घूर्णित | घूर्णित |
| ७६ | १८ | माचरन्त्यश्च | माचरन्त्यश्च-रन्त्यः |
| ७७ | ७ | ब्रह्मण-डिम्ब क्षीर-कण्ठो | ब्रह्मणडिम्ब-क्षीरकण्ठो |
| ७८ | १ | पच्चासेइ | पच्चासेसि |
| ७८ | ४ | असुधा- | असुधा |
| ७९ | ५ | णिम्मञ्जणं | णिम्मुञ्छणं |
| ७९ | ७ | सङ्ग | सङ्गं |
| ७९ | १९ | निर्म्मञ्छनन्ते | निर्म्मुञ्छनन्ते |
| ८० | ९ | चान्द्रमो | चन्द्रमो |
| ८० | १४ | ठिद्दोहिं | ठिट्ठेहिं |
| ८० | २२ | धिष्णैः | धृष्टैः |
| ८१ | १ | कुसु-मचो- | कुसुम-चो- |
| ८३ | १० | तदाऽयम- | तदयम- |
| ८४ | १ | फणिहारो | फणिहारा |
| ८४ | १० | णन्देण | णन्दणो |
| ८६ | २१ | दुष्टाकारः | दुष्टाचारः |
| ९३ | १३ | ते न | तेन। |
| ९५ | २१ | प्रमोदीणं | प्रमोदीसं |
| ९६ | २२ | द्रुतै- | द्रुतै- |
| ९९ | ५ | दौर्मनस्येन | दौर्मनस्येन |
| १०० | ८ | मरारिः | मुरारिः |
| १०१ | ५ | यास्यतीति | यास्यसीति |
| १०१ | ८ | लोकोत्तरम | लोकोत्तरम् |
| १०१ | २० | भम | भमे |
| १०२ | २० | भजध्वमज्ञाः | भजध्वमज्ञा |
| १०३ | १० | तृणमिव | तृणमिव |
| १०४ | ५ | मरा | मुरा |
| १०४ | ७ | रलच | रलच |